# पिङ्गलछन्दःसूत्रम्

यादवप्रकाशप्रणीतेन-पिङ्गलछन्दोविचितिभाष्येण समुपेतम्

सम्पादकः
डा० विजयपालः

# पिङ्गलछन्दःसूत्रम्

## यादवप्रकाशप्रणीतेन-पिङ्गलछन्दोविचितिभाष्येण समुपेतम्

( अनेकैः परिशिष्टैः समलंकृतम् )



सम्पादकः

डा० विजयपालः

प्रकाशकः—
श्रीमती सावित्रीदेवी बागड़िया ट्रस्ट
१७०, बी. ब्लाक, न्यू अलोपुर
कलकत्ता

वितरकः—
रामलाल कपूर ट्रस्ट,
बहालगढ़, सोनीपत
(हरयाणा) पिन-१३१०२१

प्रथमसंस्करणम्—५००
फाल्गुन, सं० २०४४ वि०;
फरवरी, सन् १९८८ ई०
मूल्य—४०-००

मुद्रकः—
रामकिशन
रामकिशन सरोहा प्रेस,
बहालगढ़, सोनीपत
(हरयाणा) पिन-१३१०२१

# आमुखम्

'श्रीमती सावित्रीदेवी बागड़िया ट्रस्ट' (कलकत्ता) इत्याख्यायाः संस्थायाः संस्थापकेन वैदिकधर्मानुरागिणा श्रेष्ठिवर्येण श्रीमता 'मोहनलाल बागड़िया' इत्यभिधेयेन मम सम्मत्या वैदिक-वाङ्मय-सम्बद्धानां प्राचीनानाम् अर्वाचीनानां देववाणी-निवद्धानाम् उत हिन्दीभाषामयानां ग्रन्थानां प्रकाशनस्यैका योजना २०३५ तमे वैक्रमाब्दे स्वयकारि। तदनुसारं मया श्रीमतो विजयपालविद्यावारिधेः सहयोगेन कार्यमिदं प्रारब्धम्। तत्र प्रथमपुष्परूपेण वहोः कालाद् दुष्प्रापतां गतस्य गोपथब्राह्मणस्य अनेकैः कोशैः सम्मेल्य सर्वातिशुद्धं संस्करणं २०३७ तमे वैक्रमाब्दे प्राकाशि। ततः प्रभृतिरेकादश दुर्लभा अतिमहत्त्वपूर्णा वैदिकवाङ्मयेन सम्बद्धा ग्रन्थाः अनया संस्थया प्रकाशिताः। द्वादशोऽयं ग्रन्थो वैदिकवाङ्मयजुषां विदुषां करकमलेषूपस्थाप्यते।

दैवदुर्विपाकेन श्रेष्ठिवर्यस्य 'मोहनलाल बागड़िया' इत्याख्यस्य २०४२ तमे वैक्रमाब्दे वैशाखस्य कृष्णपक्षस्य प्रतिपदि (=५-५-१९८५) निधनमजायत। एतेन प्रारब्धस्यास्य कार्यस्य गत्यवरोधशङ्का समुत्पन्ना, परन्तु बागड़ियामहोदयस्य वैदिक-धर्मानुरागिण्या धर्मपत्न्या श्रीमत्या विमलादेव्या अहं प्रार्थितो यन्मम भर्त्रा वैदिक-ग्रन्थप्रकाशनस्य यत्कार्यं प्रारब्धं तद् यथापूर्वं प्रचलेत्। एतत्कार्याय यदपि द्रव्यं देयं भविष्यति तदहं प्रेषयिष्ये। इत्थमयं वैदिकवाङ्मयस्य प्रकाशनरूपं कार्यमद्य यावन्निर्बाधरूपेण प्रचलति। अग्रेऽपि प्रचलिष्यतीत्यहम् आशासे।

युधिष्ठिरो मीमांसकः

'श्रीमती सावित्रीदेवी बागड़िया ट्रस्ट' संस्थया
दशवर्ष-परिमिते अल्पसमये प्रकाशिताः

# अत्यन्तं महत्त्वपूर्णा ग्रन्थाः

१. गोपथब्राह्मणम् (मूलमात्रम्)—शुद्धतमं संस्करणम् । सम्पादकः—डा० विजयपालः । मुद्रणकालः—सन् १९८० ।

२. ऋषि दयानन्द के शास्त्रार्थ और प्रवचन—अस्मिन् ग्रन्थे दयानन्द-सरस्वतीस्वामिनः केचन शास्त्रार्थाः, पुणे-मुम्बईनगरयोः कृतानां प्रवचनानां संग्रहो वर्तते । मुद्रणकालः—सन् १९८२ ।

३. निरुक्त-श्लोकवार्तिकम्—ग्रन्थकारः केरलनिवासी नीलकण्ठो गार्ग्यः । अस्य एक एव कोशोऽतिजीर्णस्तालपत्रलिखितो वर्तते । सम्पादकः-डा० विजयपालः । मुद्रणकालः—सन् १९८२ ।

४. ध्यानयोग-प्रकाश (हिन्दी)—लेखकः—योगिराजः स्वामी लक्ष्मणानन्दः । पातञ्जलयोगशास्त्रानुसारि हिन्दीभाषायां लिखितं सुगमं पुस्तकम् । मु०—सन् १९८३ ।

५. ANTHOLOGY OF VEDIC HYMNS—लेखकः—स्वामी भूमानन्दः सरस्वती । वेदविषयकोऽत्युपयोगी ग्रन्थः । सन् १९८४ ।

६. कात्यायनीय-ऋक्सर्वानुक्रमणी—षड्गुरुशिष्य-विरचितया कृत्स्नया वृत्त्या सहिता । सम्पादकः—डा० विजयपालः । मुद्रणकालः—सन् १९८५ ।

७. वैदिक-जीवन (हिन्दी)—लेखकः—विश्वनाथो विद्यालङ्कारः । अथर्ववेद-मनुसृत्य वैदिक-जीवन-निदर्शको ग्रन्थः । मुद्रणकालः—सन् १९८५ ।

८. सूर्यसिद्धान्तः—पं० उदयनारायणसिंहविरचितया हिन्दीव्याख्यया विस्तृतया भूमिकया च समन्वितः । मुद्रणकालः—सन् १९८६ ।

९. वैदिक-गृहस्थाश्रम (हिन्दी)—लेखकः—विश्वनाथो विद्यालङ्कारः । अथर्ववेदमनुसृत्य लिखितो वैदिक-गृहस्थाश्रम-सम्बन्धी श्रेष्ठतमो ग्रन्थः । मु०—सन् १९८६ ।

१०. उणादिकोशः—श्रीमद्दयानन्दसरस्वतीस्वामिना विरचितया वृत्त्या अनेकविधैश्च परिशिष्टैः सहितः । सम्पादकः—युधिष्ठिरो मीमांसकः । सन् १९८७ ।

११. श्रौत-यज्ञ-मीमांसा—लेखकः—युधिष्ठिरो मीमांसकः । अस्मिन् ग्रन्थे श्रौत-यज्ञानां विस्तरेण परिचयः । श्रौतयज्ञानाम् ऐतिह्यम्, तेषां प्रयोजनम् इत्यादयोऽनेके विषया अत्र मीमांसिताः । अस्या हिन्दीभाषानुवादोऽपि सहैव संयोजितः । मुद्रणकालः—सन् १९८७ ।

पुस्तक-प्राप्ति-स्थानम्—
रामलाल कपूर ट्रस्ट, बहालगढ़
(सोनीपत–हरयाणा) पिन—१३१०२१

# उपोद्घातः

## १. वेदाङ्गप्रवृत्तिः

वेदः परमात्मनो निःश्वासभूतं काव्यम् (अथर्व० १०।८।३२) इत्यास्थितवतां भारतीयप्रत्नानूचानानां परमश्रद्धाभाग् बभूव। धर्मं जिज्ञासमानास्ते श्रुत्यपराभिधं वेदमेव परमप्रमाणत्वेनोरीकुर्वन्ति स्म (मनु० २।१३)। स्मृतिकारमूर्धन्यो मनुर्वेदस्य सर्वज्ञानमयत्वमाघोषयामास (मनु० २।७)। भगवान् कृष्णद्वैपायनो व्यासो वेदमेव सर्वासां प्रवृत्तीनां प्रभवं संगिरते (महा० शान्ति० २३२।२४)। अत एव सर्वाणि शास्त्राणि वेद एव स्वस्वशास्त्रबीजान्यनुसंदधते। आदिकालिकभारतीयसमाजो वेद एव केन्द्रे व्यवतस्थौ। आगमकृतोऽस्य साङ्गाध्ययनज्ञानोपार्जनार्थं समभिप्रेरयन्ति ब्राह्मणान् (महाभाष्य पस्पशा०)। किं बहुना, वेदमनधीयानस्य द्विजस्य बहिष्कारो व्यधायि स्मृतिकृद्भिः (मनु० २।१६८)।

यद्यपि सर्वकामप्राप्त्यादिर्मोक्षान्तः पुरुषार्थो वेदस्य प्रतिपाद्यो विषयः (दुर्गो निरु० १।१)इति सर्वसम्मतम्, तथापि सम्प्रति यच्च यावच्च वैदिकवाङ्मयमुपलभ्यते तद्वेदस्य यज्ञार्थत्वमधिकृत्य प्रणीतमिति नातिरोहितं विपश्चिताम्। यज्ञप्रसङ्गेन विकसितस्य वैदिकवाङ्मयस्य विकासक्रमो यास्केन व्याह्रियते सुतराम्। तथा हि—

> साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् संप्रादुः। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च। निरु० १।२०॥

त्रीनत्र कालविभागानाकूतान् प्रतीमः—दर्शनकालं, सम्प्रदायकालं, समाम्नायकालं चेति। तत्र प्रथमे तावद् दर्शनकाले नीरजस्तमस्त्वाद् निर्मलशेमुशीका ऋषयः पदार्थान् यथास्वमधिगतवन्त ऋग्यजुःसामेति त्रिविधरचनासंयुतान् मन्त्रान् ददृशुः। ततोऽर्वाचि सम्प्रदायकाले द्रष्टार ऋषयः स्वापेक्षयाल्पसामर्थ्येभ्योऽनूचानेभ्यो मौखिकोपदेशदिशा मन्त्रान् कृतपदार्थसम्बन्धविचयान् संप्रादुः। इमे खल्ववरकालभवाः श्रुतर्षिपदजुषः शिष्योपाध्यायिकया वृत्त्या मन्त्रप्रदानात् चरणाभिधानां सम्प्रदायानां प्रवर्त्तका बभूवुः। चरणभेदप्रयोजको याज्ञिकप्रक्रियाविशेष आसीदिति प्रतीमः। ततोऽप्यर्वाचि समाम्नायकाले मौखिकोपदेशं चिरं धारयितुमसमर्था अपि वेदपरिरक्षणसमुत्सुकास्तत्तत्सम्प्रदायसम्बद्धा आचार्या निघण्टून्, शाखाः सब्राह्मणाः, वेदोपकारकाणि च वेदाङ्गनामधेयानि शास्त्राणि ग्रन्थरूपेण निबबन्धुः। तदेवं चरण-शाखा-ब्राह्मण-वेदाङ्गात्मकं वैदिकं वाङ्मयं यज्ञप्रसङ्गेन समुद्भूतमिति यास्कहृदयं प्रतीमः।

## २. वेदाङ्गकालः

योऽयं वेदाङ्गानां क्रमिक उद्भवो विकासश्चोपरिष्टाद् उदीरितस्तत्र समनियत-रूपेण कालनिर्धारणं नावबुध्यते। कुशकाशावलम्बनन्यायमाश्रित्य यः प्रयासोऽत्र मनीषिभिर्व्यधायि स प्रदर्श्यते समासेन। षडङ्गशब्देन तावद्—'**नाषडङ्गविदस्तत्रास्ति**' इति वाल्मीकीये रामायणे (बाल० ७।१५), '**वेदात् षडङ्गान्युद्धृत्य**' इति महाभारते (शान्ति० २८४।९२), '**षडङ्गविदस्तत् तथाधीमहे**' इति गोपथब्राह्मणे (पूर्वार्धे १।२७) च वेदाङ्गान्युल्लिख्यन्ते। प्रत्येकं नामग्राहं प्राचीनतमोल्लेखस्त्वमीषां मुण्डकोपनिषदि (१।१।५) अपरविद्याप्रसङ्ग उपलभ्यते। तथा हि—**तत्रापरा विद्या ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति**। देवलश्चावोचत्—**शिक्षाव्याकरणनिरुक्तछन्दःकल्पज्योतिषाणि** इति। अपि च—**शीक्षां व्याख्यास्यामः** (तै० आ० ७।२), **तस्मादियं व्याकृता वाक्** (तै० सं० ६।४।७।३), **स वा एष आत्मा हृदि। तस्यैतदेव निरुक्तं हृद्ययमिति** (छा०उप० ८।३।३) इत्येवमादीनि वचांसि खलूपनिषत्काले वेदाङ्गानामस्तित्वम् अभिव्यञ्जयन्ति। कालेयत्ताया विवादास्पदत्वात् प्रकृते चानुपयोगादत्र तन्निर्धारणार्थं न प्रयस्यते।

## ३. वेदाङ्गत्वं नाम वेदोपकारकत्वम्

यज्ञप्रसङ्गोन्मीलितेषु नानावैदिकसम्प्रदायेषु स्वस्ववेद(शाखा)परिरक्षणतत्परेषु प्रमाणभूता अनूचाना वेदाङ्गानि कल्पयाञ्चक्रुरित्युदटङ्कि प्राक्। तदेवं यज्ञप्रसङ्गवशात् समजायन्त विकासं च प्राप्नुवन् शिक्षादीनि शास्त्राणि। कालान्तरे त्वमीषां लौकिकविद्यास्थानत्वम् ऊरीकुर्मह एव। तदेषां शास्त्राणां वेदोपकारकत्वेन वेदाङ्गत्वम् आस्थीयते, न तु वेदावयवत्वेन, मीमांसकमूर्धन्येनैव कुमारिलेन (तन्त्र० १।३।२४)। तत्र शिक्षा तावद् अकारादिवर्णानाम् उदात्तादिस्वरं ह्रस्वादिमात्रां कण्ठादिस्थानं स्पृष्टताद्याभ्यन्तरप्रयत्नं घोषवत्त्वादिबाह्यप्रयत्नं ग्रस्तादिदोषं माधुर्यादिगुणं चोपदिशती महत उपकाराय वेदस्य कल्पते, तत्तद्वैगुण्ये **दुष्टः शब्दः** (महाभाष्य-पस्पशा०) इत्यादिना दोषस्मरणात्। कल्प्यते समर्थ्यते यागप्रयोगो यस्मिन्निति व्युत्पत्त्या कल्पो यज्ञस्वरूपमुन्नयति। तस्मात् कर्मपौर्वापर्यमन्त्रविनियोगादिकं कल्पाध्ययनाद् ऋते न सम्भवतीति कल्पोऽपि वेदोपकारकः। व्याकरणं प्रकृतिप्रत्ययविभागकल्पनया वैदिकपदानां स्वरूपं प्रदर्शयद् अर्थं चावबोधयद् वेदमुपकरोतीति सार्वलौकिकोऽनुभवः। अत एव महाभाष्यकृत् पतञ्जलिरभिव्याजहार—**रक्षार्थमध्येयं व्याकरणम्** (पस्पशा०) इति। मन्त्रार्थावबोधे निरुक्तवेदाङ्गस्यापरिहार्यतामुद्दिश्य यास्कः—**अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते** (निरु० १।१५)इत्युदीरयामास। अर्थमजानता चर्त्विजा न शक्यते मन्त्रो यथायथं विनियोक्तुम् इति च ध्वनयति जैमिनिः—**अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्** (पू० मी० ६।६।३६) इति।

कर्माङ्गभूतकालपरिज्ञानार्थं ज्यौतिषमपेक्ष्यते। तथा चाह भास्कराचार्यः सिद्धान्त-शिरोमणौ—

**वेदास्तावद् यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण।**
**शास्त्रादस्मात् कालबोधो यथा स्याद् वेदाङ्गत्वं ज्यौतिषस्योक्तमस्मात्॥**

छन्दःशास्त्रं खल्वपि वेदमन्त्राणाम् अक्षरसंख्यामात्रापादव्यवस्थापरिज्ञापकत्वाद् उपकुरुते वेदस्य। अक्षरसंख्यादिसाध्यैश्छन्दोभिरनुष्ठेया बह्वो विधयः श्रूयन्ते ब्राह्मणे। तद्यथा—**गायत्रीभिर्ब्राह्मणस्यादध्यात्** (तै० ब्रा० १।१।९।६) इति। ते च छन्दोज्ञानं विना न शक्यन्तेऽनुष्ठातुम्। अत एवाविदितछन्दसो निन्दा श्रूयत आर्षेयब्राह्मणमुखे—**यो ह वा अविदितार्षेयछन्दोदैवते**त्यादिः। तदेवं कर्मकाण्डप्रधाने भारतीयसमाजे वेदोपकारकत्वेन शिक्षादीनां षण्णां शास्त्राणां महत्त्वम् अपरिहार्यत्वं च व्यज्यतेतराम्। अत एव पाणिनीयशिक्षाकारो जेगीयते—

**छन्दः पादौ तु वेदस्य, हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥**
**शिक्षा घ्राणं तु वेदस्य, मुखं व्याकरणं स्मृतम्।**
**तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥** इति।

अत्र हि छन्दो वेदपुरुषस्य पादस्थानीयमुच्यते। ततो वेदश्छन्दआधारेण तथैव स्थितिं गतिं चावाप्नोति यथा पुरुषः पादावाधृत्येत्याकूतं भवति।

### ४. वेदाङ्गं छन्दः

सभ्यताया उषःकाल एव छन्दांसि समाचक्रुरार्षी प्रतिभामिति वेदवपुषि विविधछन्दसां प्रयोगदर्शनाद् नामग्राहं च श्रवणादभिमन्यामहे। नित्यं नूतनैश्छन्दोभिर्ऋषयो देवांस्तुष्टुवुः। अन्तःस्फुरितानां छन्दसां कर्मकाण्डे विनियोगस्तु पश्चिमे काले समजायतेति मनीषिणां सम्मतम्। छन्दःशास्त्रेषु वैदिकछन्दांसि केवलाक्षरगणनां पादाक्षरगणनां चाधृत्य द्विधा विभज्यन्ते। तत्र यजुषां छन्दांसि केवलाक्षरगणनामाश्रित्य निर्दिश्यन्ते। ऋचां छन्दांसि पुनः पादाक्षरगणनामृगक्षरगणनां चोभयविधगणनामाश्रित्य लक्ष्यन्ते। तथा च वैदिकछन्दांसि आक्षराण्येव न तु मात्रिकाण्यपीति छन्दोलक्षणशास्त्राणि वैदिकाश्चानूचानाः संगिरन्ते। अत एव कात्यायनः प्राह—**यदक्षरपरिमाणं तच्छन्द** (ऋक्सर्वा० २।६) इति। **अक्षरेण मिमते सप्त वाणीः** (ऋ० १।१६४।२४) इति श्रुतिरस्य मन्तव्यस्य बीजमित्याहुः। यद्यपि शौनकः प्राकृतपादानां गायत्रवैराजत्रैष्टुभजागतानां प्रतिपादनप्रसङ्गे—

**वर्षिष्ठाणिष्ठयोरेषां लघूपोत्तममक्षरम्।**
**गुर्वेवेतरयोर्ऋक्षु तद् वृत्तं छन्दसां प्राहुः॥** ऋ० प्रा० १७।३९॥

इति ब्रुवंश्छन्दसामृक्षु वृत्तमनुभावयति; तथापि स तत्र भवान् पादवृत्ताक्षरेषु सांशयिकेष्वक्षराण्येव बलीयांश्छन्दोनिर्णयहेतुरिति जोघुष्यते—

**अक्षराण्येव सर्वत्र निमित्तं बलवत्तरम् ।**
**विद्याद् विप्रतिपन्नानां पादवृत्ताक्षरैर्ऋचाम्** ॥ ऋ० प्रा० १७।२१॥ इति ।

न च—**अयोऽर्थो वृत्तमित्येते पादज्ञानस्य हेतवः** (ऋ० प्रा० १७।२५) इति ब्रुवता शौनकेन पादज्ञानहेतुत्वेन छन्दोनिर्णये वृत्तस्य समाश्रयत्वमूरीकृतमेवेति वाच्यम्, अनुपदमेव—**विशेषसंनिपाते तु पूर्वं पूर्वं परं परम्** (ऋ० प्रा० १७।२६) इति वृत्तजघन्यतमत्वस्य प्रतिपादितत्वात् । जैमिनिरपि पादव्यवस्थामर्थायत्तामभिमन्यते न तु वृत्तायत्ताम् । प्रोच्यते हि तत्र भवता—**तेषामृग् यत्रार्थवशेन पादव्यवस्था** (पू० मी० २।१।३५) इति । शाबरादयोऽर्वाञ्चस्तु वृत्तवशेनापि पादव्यवस्थामूरीकुर्वन्ति ।

साम्प्रतिकास्तु छन्दोविद ऋक्षु लयविशेषं श्रावं श्रावं तत्प्रयोजकं वृत्तमभिकल्पयन्ते । तथा च ऋक्छन्दःसु कृतभूरिश्रम इ० वेर्नान आर्नल्डः स्वकीये 'वेदिक मीटर' नाम्नि ग्रन्थे (पृ० ९ इत्यादिषु) प्रत्यपोपदत्—

'ऋग्वेदस्य छन्दःसु प्रतिपादम् आद्यान्त्ययोरक्षरयोर्मात्रा उदासीनाः, कांश्चनापवादांश्च विहाय पादः स्वायत्तो रचनायाम् । प्रायः सर्वेषु छन्दःसु सामान्यत आयम्बिक(लघुगुरुलघु)लयो लक्ष्यते, अर्थात्—द्वितीयचतुर्थादिसमाक्षराणि गुरूणि वरीवृत्यन्तेतरां लघ्वपेक्षया । पादस्य पूर्वार्धे गुरूण्यक्षराणि प्रतिरुच्याधिक्यं विद्यते, परार्धे तु लघून्यक्षराणि प्रति; ततश्च सामान्यतः प्रथित आयम्बिक(लघुगुरुलघु)लयः स्वतिपरिवर्तनम् उपैति' ।

तदेवं वृत्तं पादं चाविकृत्य बहवो नियमा ऋक्छन्दसाम् आर्नल्डेनाविरकारिषत । केचित्तु छन्दोविद आर्नल्डप्रयासमवहेलयन्तोऽनुष्टुप्प्रधानम् ऋचां वृत्तमिति घोषयन्ति। तत्र **न प्रथमात् स्नौ** (पि० छ० ५।१०) इति पैङ्गलं योगम् उपोद्बलकतयोपस्थापयन्ति (इन्द्रसेनः, वेदोद्धारिणी ३।१५) ।

वैदिकछन्दःसु वृत्ते सत्यपि छन्दोग्रन्थेषु तन्निर्देशाभावः कथमिति जिज्ञासायां समुदितायां यथामति समाधीयते । पूर्वोक्ते दर्शनकाले महर्षिभिर्वृत्तं समवबोधि प्रायोजि च यथेष्टम् । ततः शास्त्रसमाम्नायकाले कर्मकाण्डपरैश्छन्दोविचक्षणैर्नानादेवतास्तवनार्थं छन्दोविशेषा अन्विष्यन्ते स्म । तत्र शास्त्रीयसूक्ष्मेक्षिकाया अपेक्षा तावती नासीद् यावती स्तवनमन्त्राणाम् । तत्र चाक्षरगणनयैव कृतकृत्यत्वात् को वृत्तमपेक्षेत किमर्थं चेत्युपयोगपक्षस्य बलवत्त्वाद् वृत्तोपेक्षा नास्वाभाविकी बभूवेति संपश्यामहे । अपि च वैदिकछन्दोभिर्बद्धस्य काव्यस्याभिनवसर्जना समवरुद्धा, असंभवत्वात् । नूतनवृत्तसंयोजितानि लौकिकानि छन्दांसि खल्वप्यवातरन् । ततो वैदिकछन्दोज्ञानम् अदृष्टोत्पत्तय एव चक्लृप इति यज्ञप्रसङ्गे ब्राह्मणकल्पादिभिः कालपनिकछन्दोविनियोगस्याभिहितत्वाद् अवसीयते । ब्राह्मणादिषु छन्दसां कालपनिकविनि-

गम् आचार्यप्रवराः श्रीयुतयुधिष्ठिरमीमांसका 'वैदिकछन्दोमीमांसा' ग्रन्थे निपुणं प्रादीदृशन्निति नेह वितन्यते । छन्दोज्ञानं वेदार्थविनिश्चयाय प्रभवतीत्यपि तत्रैव प्रत्यपीपदंस्तत्र भवन्तः ।

## ५. वैदिकछन्दोवाङ्मयम्

प्राचीनकाले वैदिकछन्दसां निरूपकं विपुलं वाङ्मयमासीदिति कालकरालमुखाद् अवशिष्टेषु सम्प्रत्युपलभ्यमानेषु कतिपयग्रन्थेषु प्रसङ्गत उद्धृतैराचार्यनामभिराक्षिप्यते । ये खल्वध्यवशिष्टा ग्रन्थास्तत्रापि प्रसङ्गतश्छन्दांसि लक्ष्यन्ते । तथा हि, तत्तद्ग्रन्थस्थानि छन्दःस्थलानि निर्दिश्यन्ते—

१. शौनकप्रोक्त ऋक्प्रातिशाख्ये छन्दःपटलम् (१६–१८पटलानि) ।
२. कत्यायनप्रोक्तायाम् ऋक्सर्वानुक्रमण्यां परिभाषाप्रकरणस्य ३–११ कण्डिकाः ।
३. पतञ्जलिप्रोक्ते निदानसूत्रे प्रथमपटलप्रथमप्रपाठकस्य १–७ खण्डाः ।
४. गार्ग्यप्रोक्त उपनिदानसूत्रे १–३ अध्यायाः ।
५. शाङ्खायनश्रौतसूत्रे सप्तमाध्यायस्यान्तिमा कण्डिका ।
६. वेङ्कटमाधवविरचितायाम् ऋगर्थदीपिकायां षष्ठाष्टकारम्भे छन्दोऽनुक्रमणी ।

दिष्टया ग्रन्थद्वयं छन्दोलक्षणनिरूपकमपि सम्प्रत्युपलभ्यते यत्र वैदिकान्यपि छन्दांसि विव्रियन्ते सह लौकिकैः । तथा हि—

१. पिङ्गलनागप्रोक्तं छन्दःसूत्रम् (छन्दोविचितिः) ।
२. जयदेवप्रोक्तं छन्दःसूत्रम् ।

## ६. छन्दःशास्त्रपरम्परा

छन्दःशास्त्रस्य हस्तलिखितकोशेषु छन्दःशास्त्रप्रवक्तॄणाम् आचार्याणां चतस्रः परम्परा उल्लिख्यन्ते । ता विपश्चितां विवेचार्थमत्रोद्ध्रियन्ते, तत्र याथार्थ्यं पौर्वापर्यं च सुधियो विचिन्वन्तु । तथा हि—

(१) पिङ्गलछन्दोविचितिभाष्यकारो यादवप्रकाशः स्वकृतेः पर्यवसाने छन्दोज्ञानावाप्तिक्रममुल्लिखति—

> छन्दोज्ञानमिदं भवाद् भगवतो लेभे सुराणां गुरुः,
> तस्माद् दुश्च्यवनस्ततोऽसुरगुरुर्माण्डव्यनामा ततः ।
> माण्डव्यादपि सैतवस्तत..........ततः पिङ्गलः,
> तस्येदं यशसा गुरोर्भुवि धृतं प्राप्यास्मदाद्यैः क्रमात् ॥ इति ।

अत्र तृतीयचरणे त्रुटितं पाठम् 'ऋषिर्यास्कः' इत्येवं परिपूर्य—शिवः, बृहस्पतिः, इन्द्रः, शुक्रः, माण्डव्यः, सैतवः, यास्कः, पिङ्गलः—इति क्रमेण छन्दःशास्त्राचार्यशिष्यपरम्परा निर्देशमाकूतं मन्यन्ते छन्दःशास्त्रैतिह्यविदः ।

(२) तस्या एव यादवप्रकाशीयकृतेर्मसूरकोशे ग्रन्थपर्यवसानानन्तरं लिपिकरोऽपर श्लोकमुल्लिखति—

छन्दःशास्त्रमिदं पुरा त्रिनयनाल्लेभे गुहोऽनादित,
तस्मात् प्राप सनत्कुमारमुनिस्तस्मात् सुराणां गुरुः।
तस्मा देवपतिस्ततः फणिपतिस्तस्माच्च सत्पिङ्गलः,
तच्छिष्यैर्बहुभिर्महात्मभिरथो मह्यां प्रतिष्ठापितम्।। इति।

तथा चैतन्निर्देशमनुसृत्य—शिवः, गुहः, सनत्कुमारः, बृहस्पतिः, इन्द्रः, पतञ्जलिः, पिङ्गलः—इति क्रमेण छन्दःशास्त्राचार्यशिष्यपरम्परा समाकूता भवति

(३) सखारामदीक्षितः पिङ्गलछन्दःसूत्रवृत्तौ (अडयारग्रन्थागारस्थे हस्तलिखितकोशे) स्वपितृविरचिताद् वार्त्तिकराजनाम्नो ग्रन्थादिमं श्लोकमुद्धरति—

शिवगिरिजानन्दिफणीन्द्रबृहस्पतिच्यवनशुक्रमाण्डव्याः।
सैतवपिङ्गलगरुडप्रमुखा आद्या जयन्ति गुरुचरणाः।। इति।

अत्र हि—शिवः, पार्वती, नन्दी, पतञ्जलिः, बृहस्पतिः, च्यवनः, शुक्रः, माण्डव्यः, सैतवः, पिङ्गलः, गरुडः—इतीमे प्राचीनाः प्रमुखाश्छन्दःशास्त्राचार्या निर्दिश्यन्ते।

(४)जयकीर्त्तिना जैनछन्दःशास्त्रप्रवक्त्रा खल्वपि प्रसङ्गतः प्राञ्चश्छन्दःशास्त्राचार्याः संकोर्त्यन्ते—

वाञ्छन्ति यतिं पिङ्गलवसिष्ठकौण्डिन्यकपिलकम्बलमुनयः।
नेच्छन्ति भरतकोहलमाण्डव्याश्वतरसैतवाद्याः केचित्।। इति।

तथा च—पिङ्गलः, वसिष्ठः, कौण्डिन्यः, कपिलः, कम्बलमुनिः, भरतः, कोहलः, माण्डव्यः, अश्वतरः, सैतवः—इतीमे प्राञ्चश्छन्दःशास्त्रस्य प्रवक्तारः।

## ७. प्राचीनवाङ्मये स्मृताश्छन्दःशास्त्रस्य प्रवक्तारः

भारते वर्षे छन्दःशास्त्रप्रवक्तॄणां गौरवमयी परम्परा प्राचीनकाल आसीदित्युपरिष्टात् प्रदर्शितम्। अथ प्राचीनसंस्कृतछन्दोवाङ्मये य आचार्या नामग्राहमन्यथा वा स्मृतास्त इह संकल्यन्ते वैदिकछन्दोमीमांसाग्रन्थमाधृत्य—

७.१. पतञ्जलिप्रोक्ते निदानसूत्रे तावद्—एके, उदाहरन्ति, पञ्चालाः, आचक्षते, बह्वृचाः, ब्रुवते, प्रतिजानत—इत्येवमादिशब्दैः स्वपूर्ववर्त्तिनां छन्दोविदामाचार्याणां मतान्युद्धियन्ते।

७.२. गार्ग्य उपनिदानसूत्रान्ते स्वोपजीव्यान् छन्दःसम्प्रदायान् निर्दिदेश—

ब्राह्मणात् तण्डिनश्चैव पिङ्गलाच्च महात्मनः।
निदानादुक्थशास्त्राच्च छन्दसां ज्ञानमुद्धृतम्।। इति।

तत्रैव ग्रन्थवपुषि—पञ्चालाः, यास्कः, एके, तण्डिनः—इति शब्दैः पूर्ववर्त्ति-

नश्छन्दोविदः स्मर्यन्ते । अतोऽग्रविन्यस्तान् ग्रन्थान् गार्ग्यतः प्राञ्च आचार्याः प्रावोचन्निति निष्कर्षः—

तण्डिप्रोक्तं ताण्ड्यब्राह्मणम्, पतञ्जलिप्रोक्तं निदानसूत्रम्, पाञ्चालप्रोक्तश्छन्दोग्रन्थः (अयं पतञ्जलेरपि प्राङ्), यास्कप्रोक्तश्छन्दोग्रन्थः (यास्कोऽयं नैरुक्तादन्यः, तैत्तिरीयानुक्रमटीकारः संभाव्यते), पिङ्गलप्रोक्ता छन्दोविचितिः, उक्थशास्त्रं चेति ।

७.३. पिङ्गलः स्वशास्त्रे सप्त छन्दःशास्त्राचार्यान् सस्मार, त्रीन् वैदिकछन्दःप्रसङ्गे चतुरश्च लौकिकछन्दोनिरूपणे । तथा हि—ताण्डी(३।३५), क्रौष्टुकिः(३।२८), यास्कः(३।२९); सैतवः (५।१७), काश्यपः(७।८), रातः(७।३४), माण्डव्यः(७।३४) इति ।

७.४. पाणिनिर्गणपाठे (अ० ४।३।७३) छन्दोविचिति-छन्दोमान-छन्दोभाषाशब्दान् संजग्राह । प्रसङ्गत इमे व्याख्यातव्यग्रन्था अवगम्यन्ते ।

## ८. प्राचीनछन्दःप्रवक्तॄणां पौर्वापर्यम्

उपरिष्टान्निर्दिष्टानामाचार्याणां कालविषये पौर्वापर्यविषये च वैमत्यं वर्वर्ति विदुषाम् । अत्र तु कालं विहाय पौर्वापर्यमात्रमाचार्यश्रीयुतयुधिष्ठिरमीमांसकमतमनुसृत्य प्रस्तूयते । तथा हि—(१) शिवः, (२) पार्वती, (३) नन्दी, (४) गुहः, (५) सनत्कुमारः, (६) बृहस्पतिः, (७) इन्द्रः, (८) शुक्रः, (९) कपिलः, (१०) माण्डव्यः, (११) वसिष्ठः, (१२) सैतवः, (१३) भरतः, (१४) कोहलः, (१५) यास्कः, (१६) रातः, (१७) क्रौष्टुकिः, (१८) कौण्डिन्यः, (१९) ताण्डी, (२०) अश्वतरः, (२१) कम्बलः, (२२) काश्यपः, (२३) पञ्चालः, पाञ्चालः (बाभ्रव्यः), (२४) पतञ्जलिः, (२५) उक्थकारः, (२६) शौनकः, (२७) पिङ्गलः, (२८) कात्यायनः, (२९) गरुडः, (३०) गार्ग्यः ।

## ९. वैदिकलौकिकछन्दसां लक्षणकारौ

९.१ पिङ्गलः—वैदिकलौकिकोभयविधछन्दोविदां मूर्धन्यः पिङ्गलः पाणिनेराचार्यस्यानुज आसीदिति लोकश्रुतिमाधृत्य षड्गुरुशिष्य ऋक्सर्वानुक्रमणीटीकायां वेदार्थदीपिकायां प्राह—सूत्र्यते हि भगवता पिङ्गलेन पाणिन्यनुजेनेति । अतोऽस्य पाणिनिसमकालिकत्वं शालातुरवास्तव्यत्वं चाभिमन्यते कैश्चिद् ऐतिह्यविद्भिः । शबरस्वामी—यथा मकारेण पिङ्गलस्य सर्वगुरुस्त्रिकः प्रतीयेत (शाबरभाष्ये १।१।१५) इति ब्रुवन्नतमेवाचार्यं स्मरति । अग्निपुराणे (अ० ३२८–३३५) छन्दोनिरूपणं पिङ्गलछन्दोविचितिमेवानुसृत्य व्यधायि । पञ्चतन्त्रके (२।२६)—छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलम्—इति समुद्रतटे पिङ्गलनिधनवृत्तं च, पैङ्गले छन्दःशास्त्रेऽपरान्तिका (४।४१) वानवासिका (४।४३) इति परम्परया कोङ्कणीयप्रमदाभिधायिनी

छन्दोनाम्नी चैतद्द्वयं संवादयन् बलदेवोपाध्यायः पिङ्गलं कोङ्कणप्रदेशेन संबध्नाति संस्कृतशास्त्रेतिहासग्रन्थे। पुराणेषु पिङ्गलो नाम नागः प्रसिद्ध इत्येव साम्यसंस्कारवशाद् यादवप्रकाशादिभिरयमाचार्यः पिङ्गलनाग इत्यवाचि संभवतः।

पिङ्गलकृतश्छन्दोलक्षणग्रन्थः पिङ्गलछन्दःसूत्रम्, पिङ्गलाचार्यविरचितं छन्दःशास्त्रम् (हलायुधवृत्तौ), पिङ्गलनागछन्दोविचितिः (यादवप्रकाशभाष्ये), पिङ्गलसूत्रम् (भास्कररायभाष्यराजे) इत्यभिधानैः प्रख्यायते। अष्टस्वध्यायेषु विभक्तोपशतत्रयसूत्रात्मिका पिङ्गलकृतिरियमतीव गौरवमयी व्यराजत, भाविना च छन्दोऽनुशास्तॄणाम् उपजीव्या बभूव प्रामाणिकतमत्वात्। सूत्रसंख्यामधिकृत्य व्याख्यातॄणां मतानि भिद्यन्ते। तथा हि हलायुधयादवप्रकाशव्याख्यातसूत्राणां संख्या प्रत्यध्याय प्रदर्श्यते—

| अध्यायः | यादवप्रकाशव्याख्यातसूत्रसंख्या (प्रस्तुतसंस्करणे) | हलायुधव्याख्यातसूत्रसंख्या (कलकत्तासंस्करणे |
|---|---|---|
| १ | १५ | १५ |
| २ | १६ | १६ |
| ३ | ६८ | ६६ |
| ४ | ५४ | ५३ |
| ५ | ३९ | ४४ |
| ६ | ४३ | ४४ |
| ७ | ३५ | ३६ |
| ८ | १६ | ३४ |
| | — | — |
| | २८६ | ३०८ |

[व्याख्याताव्याख्यातसूत्रविवेकश्चतुर्थे परिशिष्टेऽवलोक्यताम्]

भास्कररायस्त्ववोचत्—

वाक्यसिन्धुरपारोऽपि छन्दःसूत्रशतैस्त्रिभिः।
येन बद्धो नमस्तस्मै पिङ्गलाद्भुतशिल्पिने ॥

तत्र प्रथमेऽध्याये मकारादिगणसंज्ञा विधाय द्वितीयतृतीयाध्याययोश्चतुर्थाध्यायस्याष्टसूत्र्यां च वैदिकानि छन्दांसि, ततो द्वाभ्यां शताभ्यामधिकेषु सूत्रेषु लौकिकानि वृत्तानि लक्ष्यन्ते। लौकिकवृत्तेषु मात्रावृत्तानि तावच्चतुर्थेऽध्याये, समार्धसमविषमाणि च वर्णवृत्तानि पञ्चमषष्ठसप्तमाध्यायेषु समभिलक्ष्य, अन्तिमेऽध्याये प्रस्तारादीन् षट् प्रत्ययान् निरूपयामास पिङ्गलः।

६.२. जयदेवः—वैदिकलौकिकोभयविधछन्दसां द्वितीयो लक्षणकारो जयदेवः

कदा कस्मिन् प्रदेशे जनिं लेभे इत्यद्यापि सुनिश्चितं नास्ति। कृष्णमाचार्यः स्वाङ्गल-भाषाकृतौ (हिस्ट्री आफ क्लासिकल लिटरेचर) इममाचार्यं ख्रीस्तपूर्वद्वितीयतृतीय-शताब्द्याम् अस्थापयत्। आचार्ययुधिष्ठिरमीमांसका एतं षष्ठ्यां वैक्रमशताब्द्या जातमभिमन्यन्ते। अथो बलदेवोपाध्यायस्तु ख्रीस्तनवमशताब्द्यां स्थापयत्येनम्। हलायुधः पिङ्गलछन्दःसूत्रवृत्तौ द्विः (१।१०;५।८) जयदेवमतं प्रत्याचख्यौ 'श्वेतपट' इति नाम-ग्राहम्। श्वेतपट इति नञ्ङ्गप्रयोगात्, वैदिकैरुपेक्षितत्वाद्, जयकीर्ति-नमिसाधु-हेम-चन्द्रै र्जैनविचक्षणैः सादरं स्मृतत्वाच्च जैनमतानुयायी स्यादयमाचार्य इति बलदेवो-पाध्यायः।

पिङ्गलानुकृत्या जयदेवछन्दोऽप्यष्टस्वध्यायेषु विभक्तम्। तत्राद्यास्त्रयोऽध्याया वैदिकछन्दोलक्षणार्थं समर्प्यन्ते, सूत्रशैल्या च छन्दांसि निरूप्यन्ते। अन्त्यास्तु पञ्चा-ध्याया नूतनया लक्ष्यलक्षणसाधारणया वृत्तात्मिकया शैल्या लौकिकानि छन्दांसि विवृण्वते। इयमेव शैली नव्यलौकिकछन्दोलक्षणकारैरुपजीव्यते। मुकुलभट्टतनयो हर्षटो जयदेवछन्दसि वृत्तिं व्यरचयत्। मुकुलभट्टमतं मम्मटः काव्यप्रकाशे प्रत्याचष्टेति हर्षटो ख्रीस्तदशमशताब्द्याः पूर्वार्धेऽजायतेत्यैतिहासिकाः।

## १०. लौकिकछन्दसां लक्षणकाराः

सुबहव आचार्या लौकिकमात्रछन्दसाम् अनुशासनानि व्यदधुः। तत्र विहङ्गमदृष्टिपातन्यायेन प्रमुखाः केचन सामान्यतः परिचाप्यन्ते—

**१०.१. भरतः**—भरतः स्वनाट्यशास्त्रस्य पञ्चदशषोडशाध्यायौ छन्दःशास्त्रं प्रति समर्पयामास, एतच्च शास्त्रं छन्दोविचितिपदेनाभिदधौ। तत्र पञ्चदशेऽध्याये छन्दांसि सामान्येन विविक्तानि, षोडशे तु तानि लक्ष्यलक्षणैर्युतानि मुद्रालङ्काररीत्या संज्ञापितानि। पिङ्गलस्य स्मरणं विना मकारादिगणा अत्र छन्दोविचितौ निर्दिश्यन्ते, परं लक्षणेषु तु गुरुलघुविधैवाश्रियते।

**१०.२. गणस्वामी जनाश्रयो वा**—जानाश्रयी छन्दोविचितिरिति नाम्ना प्रसिद्धे छन्दोऽनुशासने आदौ जनाश्रयो नाम नृपः स्तूयते। तत्र केचित् तमेव ग्रन्थकारमभि-ज्ञापयन्ति, अन्ये तु छन्दोविचितिवृत्तिकारं गणस्वामिनमेव ग्रन्थकारमभिमन्यन्ते। जनाश्रयः कृष्णागोदावरीमण्डलप्रशासको माधववर्मप्रथमोऽभिज्ञायते, कालश्चास्य ख्रीस्तसप्तमशताब्द्याः प्रारम्भः स्वीक्रियते। अयं ग्रन्थकारः पिङ्गलोपज्ञातान् गणान् परिष्कृत्य, सुसङ्गतान् अष्टादश गणान् उपचक्रमे। षडध्यायात्मकस्यास्य ग्रन्थस्य प्रथमेऽध्याये स्वशास्त्रीयाः संज्ञाः, द्वितीये विषमवृत्तानि, तृतीयेऽर्धसमवृत्तानि, चतुर्थे समवृत्तानि, पञ्चमे वैतालीयमात्रासमकार्याभिधानि जातिछन्दांसि, षष्ठे च प्रस्तारान् निरूपयामास ग्रन्थकारः। कालिदास-भारवि-कुमारदासाश्वघोषादीनां कवीनां कृतिभ्यः पद्यानि वृत्तावुद्ध्रियन्ते।

१०. ३. **जयकीर्त्तिः**—जयकीर्त्तिर्लौकिकानां छन्दसां लक्षणग्रन्थं छन्दोऽनुशासननामानं रचयामास। तस्य कालः ख्रीस्तदशमशताब्द्याः पूर्वार्धः स्वीक्रियते विद्वद्भिः। छन्दोऽनुशासनारम्भे वर्धमानस्य वन्दितत्वाद् जयकीर्त्तिर्जैनमतानुयाय्यासीदित्यनुमीयते। ग्रन्थेऽस्मिन् कन्नड़भाषाछन्दसां निरूपणं ग्रन्थकारस्य कन्नडप्रदेशवास्तव्यतामनुमापयति। छन्दोऽनुशासनम् अष्टस्वध्यायेषु विभज्यते, तत्र सप्तमे कन्नडभाषाछन्दांसि लक्ष्यन्ते। आर्यानुष्टुम्निबद्धोऽयं ग्रन्थश्छन्दोलक्षणानि तत्तच्छन्दोविशेषैः प्रस्तौति। जयकीर्त्तिरस्य ग्रन्थस्यान्त्ये पद्ये, माण्डव्य-पिङ्गल-जनाश्रय-सैतव-पूज्यपाद-जयदेवान् छन्दःशास्त्रस्य प्रवक्तॄन् अभिदधौ। यतः सत्त्वासत्त्ववादिनां पिङ्गल-वसिष्ठ-कौण्डिन्य-कपिलमुनीन् भरत-कोहल-माण्डव्याश्वतर-सैतवांश्चाचार्यान् निर्दिदेश जयकीर्त्तिश्छन्दोऽनुशासनेऽस्मिन्निति पूर्वं व्याहृतमेव।

१०. ४. **कालिदासः**—चतुश्चत्वारिंशच्छ्लोकात्मकोऽल्पकायः श्रुतबोधनामा ग्रन्थः स्वानेव गुणैर्विदुषां चेतांसि हरति। कश्चित् कालिदासो नाम छन्दोविद् अस्य प्रणेतैकादशशताब्द्यां बभूवेति प्रसिद्धिः। श्रुतबोधे गणा नामग्राहं निर्दिश्यन्ते, न तूपयुज्यन्ते। श्लोकैरेव लक्ष्यलक्षणे निरूप्येते। सुगममधुरगिरा त्रीणि मात्राछन्दांसि सप्तत्रिंशच्च वर्णवृत्तान्यत्र प्रतिपाद्यन्ते।

१०. ५. **केदारभट्टः**—पब्बेकसूनोः कश्यपवंशीयस्य केदारभट्टस्य जीवनवृत्तविषये न किमपि ज्ञायते ऋते पितृवंशनामभ्याम्। अयमाचार्यो दाक्षिणात्यः, ख्रीस्तैकादशशताब्द्यां जात इतीतिहासज्ञा आतिष्ठन्ते। वृत्तरत्नाकरो नाम सुव्यवस्थिता स्वल्पपरिमाणा चास्य कृतिः सुप्रथिता वर्तते लोके, उपयुज्यतेतमां च छन्दोबोधार्थं साम्प्रतिकैः। षट्त्रिंशदुत्तरशतश्लोकपरिमितोऽयं ग्रन्थः षट्सु विभज्यतेऽध्यायेषु। तत्र प्रथमेऽध्याये तावत् संज्ञानिर्देशः, द्वितीय आर्यादिमात्रिकछन्दांसि, तृतीय उक्तादिवर्णवृत्तानि, चतुर्थेऽर्धसमवृत्तानि, पञ्चमे विषमवृत्तानि, षष्ठे च प्रस्तारादिप्रत्यया विव्रियन्ते। गणनिर्देशपुरःसरलक्षणयुतैर्लक्ष्यपद्यैश्छन्दोनिर्देशाद् वृत्तरत्नाकरश्छन्दोविदां चित्तान्याकृक्षत्। अतोऽस्य व्याख्यातॄणां संख्यैतद्विषयकस्यान्यस्य ग्रन्थस्य व्याख्यातृसंख्याम् अतिशेते।

१०. ६. **हेमचन्द्रः**—हेमचन्द्रोऽलौकिकप्रतिभासंपन्न आचार्य आसीद् जैनमतानुयायी। ख्रीस्तीयेऽष्टाशीत्युत्तरसहस्रतमेऽब्दे गुर्जरप्रदेशे लब्धजन्मा, चालूक्यनरेशस्य जयसिंहसिद्धराजस्य प्रेरणया सिद्धहेमानुशासनस्य प्रणेता, जयसिंहोत्तराधिकारिणः कुमारपालस्य गुरुः, काव्यानुशासनस्य छन्दोऽनुशासनस्य च रचयिता, शास्त्रीयवाङ्मयस्यानुपमसंकलयितायं यशस्वी विद्वान् द्विसप्तत्युत्तरशताधिकसहस्रतमे ख्रीस्ताब्दे पञ्चत्वं प्राप।

हेमचन्द्रस्यानुशासनत्रयमध्येऽन्यतमा कृतिश्छन्दोऽनुशासनं नाम लोके प्रतिष्ठितं पदमवाप स्वगुणवत्तया। पिङ्गल इव हेमचन्द्रोऽपि सूत्रात्मकमष्टस्वध्यायेषु

विभक्तं ग्रन्थं रचयामास प्राचीनच्छन्दःशास्त्राण्यादुह्य। तत्र प्रथमे तावदध्याये संज्ञाः, द्वितीये समवृत्तानि, तृतीये चतुर्थपूर्वार्धे चार्धसमविषमादीनि, चतुर्थोत्तरार्धे आर्यादीनि प्राकृतानि छन्दांसि, पञ्चमषष्ठसप्तमेष्वपभ्रंशछन्दांसि, अष्टमे च प्रस्तारादयः षट् प्रत्यया निरूप्यन्ते। हेमचन्द्रः सूत्राणि सर्वत्रैव संस्कृतगिरा प्रावोचत्, उदाहरणानि तु यथायोगं भाषात्रये स्वोपज्ञान्येव प्रास्ताषीत्।

**१०. ७. गङ्गादासः**—गङ्गादासस्य जीवनवृत्तमद्यावधि नावबुध्यते। तस्य कृतेश्छन्दोमञ्जर्या उत्कलप्रदेशे प्रसारबाहुल्यात् तमुत्कलीयमभिमन्यन्ते विपश्चितः। छन्दोमञ्जरीरचनाकालः खीस्तीययोस्त्रयोदशपञ्चदशयोः शताब्द्योरन्तरालः कल्प्यत इतिहासज्ञैः। षट्स्तबकात्मकोऽयं ग्रन्थः सुबोधलक्षणोदाहरणयुत इति सुप्रख्यायते विशेषत उत्कले। अस्यान्तिमे स्तबके गद्यकाव्यानि निरूप्यन्ते।

## ११. पिङ्गलछन्दःशास्त्रस्य व्याख्यातारः

छन्दोलक्षणग्रन्थास्तेषां प्रवक्तारश्चोपरिष्टात् समासतः प्रस्तुताः। तत्र पिङ्गलशास्त्रस्य छन्दोवेदाङ्गपदास्पदत्वात् प्रमुखं स्थानमिति तद्व्याख्यातॄन् प्रति पक्षपातो विशेषः। प्रासङ्गिकाः खल्वपि ते, तेषामन्यतमस्य यादवप्रकाशस्य कृतेरिदंप्रथमतया प्रकाश्यमानत्वात्। हलायुधः, मकरध्वजपुत्रः श्रीहर्षशर्मा, वाणीनाथः, रामभट्टपुत्रो लक्ष्मीनाथः, यादवप्रकाशः, दामोदरश्चेतीमे पिङ्गलछन्दःशास्त्रस्य व्याख्यातारः सूच्यन्ते कृष्णमाचार्येण शास्त्रीयसंस्कृतवाङ्मयेतिहासाभिधे आङ्गलग्रन्थे। नारायणस्य वृत्तोक्तिरत्नम् चन्द्रशेखरस्य च वृत्तमौक्तिकं पिङ्गलछन्दःसूत्राणामर्थमात्रं स्फोटयतः। तत्र वृत्तमौक्तिकं पिङ्गलसूत्राणां वार्त्तिकमित्यभिधीयते ग्रन्थकृता। भास्कररायः पिङ्गलछन्दःसूत्रभाष्यराजाभिधं व्याख्यानं प्रणिनाय। पिङ्गलछन्दोव्याख्यानेषु हलायुधवृत्तिः प्रकाशितचरा वर्तते। यादवप्रकाशस्य छन्दोविचितिभाष्यं संपाद्य संप्रति प्रकाश्यते। अवशिष्टानि व्याख्यानानि तु प्रकाशं प्रतीक्षन्ते। अथात्र त्रयः प्रमुखाः व्याख्यातारोऽनुक्रम्यन्ते—

**११. १. हलायुधः**—पिङ्गलछन्दःशास्त्रस्य प्राचीनतमो व्याख्याता हलायुध आसीत्। अस्य जीवनवृत्तविषयेऽधिकं न ज्ञायते। अयमाचार्यः कविरहस्यनामके ग्रन्थे स्वाश्रयदं कृष्णराजं राष्ट्रकूटकुलोद्भव इत्युदीरयामास। राष्ट्रकूटवंशे त्रयो नृपाः कृष्णराजपदभाजो बभूवुः—शुभतुङ्गः, अकालवर्षः प्रथमः, अकालवर्षो द्वितीय इति। तत्र द्वितीयोऽकालवर्षो हलायुधस्याश्रयदः, स च खीस्ताब्दे ९४५–९६६ शशासेति पुरावृत्तज्ञा आहुः। कृष्णराजानन्तरं खुडिगदेवस्ततश्च मुञ्जः शासको बभूव। मुञ्जप्रशस्तिपरा नैके श्लोका लक्ष्यरूपेण मृतसञ्जीवन्यां हलायुधकृतछन्दोवृत्तौ संगृह्यन्ते (पि० छ० ४।६; ४।२०; ५।३४; ५।३९; ७।५; ८।१२)। तामेतां राजत्रयीं हलायुधः समाशिश्रियत्। मुञ्जो नरेशो धारामहिपभोजस्य पितृव्यो विद्यावतामाश्रयः स्वयं

च विद्यैकव्यसन आसीत्। तस्यैव काले ख्रीस्तीयाया दशमशताब्द्या अन्त्ये चरणे हलायुधश्छन्दोवृत्तिं निरमिमोत। मृतसंजीवनो नाम वृत्तिरियं सुगमा विस्पष्टार्थ-प्रकाशिका यथेष्टोदाहरणसयुता चेति सहृदयचेतांसि प्रीणयति।

११. २. **यादवप्रकाशः**—प्रौढो वैदिकोऽनूचानो भावप्रकाशः पिङ्गलछन्दः-सूत्राणां सुविशदां व्याख्या पिङ्गलनागछन्दोविचितिभाष्याभिधां प्रणिनाय। भगवत्पदजुड् यादवप्रकाशो विशिष्टाद्वैतवेदान्ताचार्यस्य रामानुजस्य गुरुत्वेन प्रख्यातः। अतोऽस्य जीवनकालः ख्रीस्तीयाया दशम्याः शताब्द्या अन्त्यचरणाद् आरभ्यैकादश्या आद्यचरणं यावद् अनुमीयत ऐतिह्यविद्भिः। केदारभट्टप्रणीते वृत्तरत्नाकरे (६।१) वर्तमानं **'प्रस्तारो नष्ट उद्दिष्ट'** (पि० छ० ८।२ भाष्ये) इति श्लोकं यादवप्रकाशः स्वल्पपाठान्तरेणोद्धरतीत्ययमाचार्यः केदारभट्टादर्वाङ् प्रतीयते। यादवप्रकाशो वैजयन्तीकोषं यतिधर्मसमुच्चयं चेति ग्रन्थान्तरद्वयमपि विरचयाम्बभूव। तत्र कोशे वैदिकशब्दानामपि बहुशः संकलनात्, छन्दोविचितिभाष्ये च वैदिकछन्दसां यथेष्टोदाहरण-संयोजनाद् अस्याचार्यस्य वैदिकवाङ्मयेऽव्याहतगतिराक्षिप्यते। वैदिकछन्दोविषये-स्याचार्यस्य प्रामाण्यं ऋक्सर्वानुक्रमणीव्याख्यां षड्गुरुकृतां वेदार्थदीपिकामप्यतिशेत इति छन्दःसमीक्षकाः। लौकिकछन्दःप्रसङ्गेऽयमाचार्यः पिङ्गलप्रोक्तलक्षणं व्याख्याय स्वरचितपदान्युदाहरति, अथ च नवीनानि छन्दांसि समुद्भाव्य लक्षणपुरःसराण्यु-दाहरणानि प्रस्तौति। तत्रोदाहृतपद्येषु या सात्त्विकता परिलक्ष्यते, सा स्थानेऽधिगत-यतिधर्मत्वात्।

यादवप्रकाशीयभाष्य-हलायुधीयवृत्त्योः सुबहूनि भेदस्थलानि परिलक्ष्यन्ते। तथा हि—**क्वचित् त्रिपादृषिभिः सा पादनिचृत्** (३।६) इत्येको योगो भाष्ये हलायुधस्तु सूत्रद्वयमभिकल्प्य व्याचख्यौ। बहुत्र सूत्रक्रमविपर्यासोऽप्युपलभ्यते, यथा—३।६४,६।१०,६।४१। सूत्रपाठा विभिद्यन्ते—यथा—**चूलिकार्धमेकोनत्रिंशदन्ते ग्** (४।५३) इति यादवीये, चूलिकैकोनत्रिंशदन्ते ग् इति हलायुधीयायाम्। क्वचिद् योगांशनैयून-माधिक्यं वोपलभ्यते, यथा—प्रकृत्या च (४।४) यादवीये, प्रकृत्या चोपसर्गत्रजित इति हलायुधीयायाम्। उभयत्र नानासूत्राणि व्याख्याताव्याख्यातानि दृश्यन्ते, एतादृशानि सूत्राण्यत्र संस्करणे परिशिष्टे संकलितानि। व्याख्याभेदस्तु तत्र तत्र लक्ष्यत एव।

११. ३. **भास्करराय**:—ख्रीस्तीययोः सप्तदशाष्टादशयोः शताब्द्योः सन्धिकाले-ऽनुपमप्रतिभासम्पन्नो नानाशास्त्रावगाहनपटुर्महाराष्ट्रप्रदेशलब्धजन्मा द्विजवरो भास्कररायः काश्यां शास्त्राण्यभ्यस्याभिनवैर्ग्रन्थरत्नैर्देवगीर्वाङ्मयं समर्धयामास। अस्याचार्यस्य प्रतिभोत्सतः स्वल्प एव वयसि शास्त्रप्रवाहा उदभवन्। तथा च वयसः सप्तदशे वत्सरे छन्दःकौस्तुभम्, विंशे वृत्तरत्नाकरविवृतिं मृतजीवनीम्, ततो वादकुतूहलादीरष्ट कृतीः, पञ्चाशत्तमे वृत्तचन्द्रोदयं च प्राणैषीत् सः। वृत्तचन्द्रो-

दयसदृशीं प्रौढकृतिं विरचय्यापि स्वप्रतिभायाः साधिष्ठं फलं पिङ्गलछन्दःशास्त्रव्याख्यानं भाष्यराजाभिधं प्रास्तावीद् भास्कररायः सप्तपञ्चाशत्तमायां समायां वयसः। भाष्यराजो यादवप्रकाशकृतेर्विपुलं साहाय्यमधिगृह्य व्यरच्यतेति सत्यम्, कामं च वैदिकवृत्तविवेचना न पिङ्गलनागछन्दोविचितिभाष्यस्तरं स्पृशति, तथापि भास्कररायप्रस्तुते लौकिकछन्दसां निरूपण-समीक्षणे अनुपमे एवेति सहृदयाः प्राहुः।

## १२. प्रस्तुतसंस्करणम्

वैदिकवाङ्मयकृतभूरिश्रमेण यादवप्रकाशेन कृतं छन्दोवेदाङ्गस्य पिङ्गलनागछन्दोविचितेर्भाष्यं सर्वश्रेष्ठम् इति निश्चिन्वाना आचार्यश्रीयुधिष्ठिरमीमांसकाश्चिरात् प्रकाशयितुकामाः संयोगं प्रतीक्षन्ते स्म। अतीते वत्सरे ते होशियारपुरस्थ-विश्वेश्वरानन्दशोधसंस्थान-संबद्धं विद्वद्वरं डा० मुनीश्वरदेवं समादिशन् उपर्युक्त-भाष्यस्य विश्वेश्वरानन्द-शोधसंस्थानस्थाः प्रतिलिपीः परस्परं सम्मेल्य प्रेषयितुम्। इमेऽपि सहृदया अनूचाना यथादेशं छायाप्रतिलिपिं कारयित्वा,हस्तलिखितकोशप्रतिलिपीः परस्परं सम्मेल्य, पाठान् सम्मृश्य, यथेष्टं निर्दिश्य,भाष्योद्धृतसंदर्भान् प्रायशः संकेत्य छायाप्रतिलिपिं समार्पिपन्नाचार्यवरचरणेषु। ततोऽवशिष्टं कार्यं प्रस्तुत-पङ्क्तिलेखको निरवाक्षीत्।

प्रस्तुतसंस्करणे होशियारपुरस्थ-विश्वेश्वरानन्दशोधसंस्थाने सुरक्षितास्त्रयो हस्तलिखितकोशा उपायुज्यन्त। तथा हि—

(१) मैं० १—मैसूरपुस्तकागारस्थ-हस्तलिखितकोशस्य प्रतिलिपिः, नागराक्षरैर्लिखिता, वि० पु० ५७६६, पृष्ठसंख्या—१४४। प्रस्तुतसंस्करणे 'मैं० १' इति संकेत्यते।

(२) मैं०२—मैसूरपुस्तकागारस्थ-हस्तलिखितकोशस्य प्रतिलिपिः, नागराक्षरैर्लिखिता, वि० पु० ६४३०, पृष्ठसंख्या—२३८। प्रस्तुतसंस्करणे 'मं०२' इति संकेत्यते। कोशमिमं कश्चिदन्येन केनचन हस्तलिखितकोशेन सार्धं संम्मेल्य, तत्र याः पादटिप्पणीर्व्यधात्, ताः प्रस्तुतसंस्करणेऽपि यथायथमानीताः।

(३) त्रि०—त्रिवेन्द्रम्-पुस्तकागारीय-हस्तलिखितकोशस्य प्रतिलिपिः, नागराक्षरैर्लिखिता, वि० पु० ५७६५, पृष्ठसंख्या—१३१। प्रस्तुतसंस्करणे 'त्रि०' इति संकेत्यते।

तदत्र प्रथमहस्तलिखितकोशमाधृत्य संशोधनानि व्यधीयन्त, पाठभेदाश्च पादटिप्पणीषु समगृह्यन्त। केचन पाठभेदा उपेक्षणीयाः सन्तोऽप्यत्र संगृहीताः, भाविसंस्करणमभिसमीक्ष्यैव। केषुचन पाठेषु यथामति परिशोधितेष्वपि मूलपाठाः टिप्पणीषु सुरक्षिता अत्र। परमष्टमेऽध्याये तु सन्ति तादृशा बहवः सन्दर्भा यत्र संशोधनं विहाय यथाकोशमेव पाठः सुरक्षितः, सुधीतरः सहृदयः कश्चित् परिमार्क्ष्य-

तीति मनसिकृत्य। पिङ्गलछन्दःसूत्राणाम्, भाष्योद्धृतसंदर्भाणाम्, छन्दोनाम्नाम्, हलायुध-यादवप्रकाश व्याख्याताव्याख्यातछन्दःसूत्रविशेषाणां चानुक्रमणिकाः परिशिष्टचतुष्टयरूपा ग्रन्थान्ते संयोज्यन्ते पाठकानां सौविध्यार्थम्।

## १३. कृतज्ञताविज्ञप्तिः

वैदिकवाङ्मयोद्धारपरायणानां यावज्जीवनाभ्यस्तसारस्वतव्रतानां राष्ट्रपण्डितगौरवभाजां रामलालकपूरन्यासाध्यक्षाणां श्रद्धेयानामाचार्यप्रवराणां श्रीयुधिष्ठिरमीमांसकानां तपःपूतपादाम्बुजांस्तावत् सविनयं वन्दामहे येषां स्नेहसिक्तादेशनिर्देशप्रोत्साहनैः कामपि वैदिकवाङ्मयसेवामाचरामः। वस्तुतस्तेषामेव मानसप्रसूतिरियम् अप्रकाशितवैदिकवाङ्मयप्रकाशनयोजना यस्यामधि वैदिकग्रन्थाः प्रकाशमानीयन्ते न्यासेन। एत एव विद्वच्छ्रद्धाजुषो डा० मुनीश्वरदेवमभिप्रेर्य पिङ्गलनागछन्दोविचितिभाष्यप्रतिलिपिं प्रापिपन्। सुहृद्वरा डा० मुनीश्वरदेवमहाभागा व्याहृतचरान् कोशान् सम्मेल्य, तत्तद्विशेषान् सन्दर्भसंकेतांश्च प्रायेण निर्दिश्य छायाप्रतिलिपिं समार्पयन्। तदिदं तैरुपक्रान्तं कर्मेह पूर्त्तिमानीयत इति तैरुपकृताः स्मः। अस्मत्सहयोगिनौ श्रीरुन्द्रदत्तशर्म-रामप्रकाशवर्णिनौ मुद्रणपत्रशोधन-परिशिष्टनिर्मितिभ्यां साहाय्यमकार्ष्टामिति ताभ्यां शुभमाशंसामहे। कलकत्तास्थितस्य सावित्रीदेवी-बागड़िया-न्यासस्य श्रद्धालवोऽधिकारिणः साधुवादान् विशेषतोऽर्हन्ति, ये ग्रन्थमिमं स्वन्यास द्वारा प्राचकाशन्। श्री रामकिशनचौधरी महाभागाः स्वमुद्रणालये निर्दोषप्रायं मुद्रणं व्यधानिति धन्यवादान् अर्हन्ति। ग्रन्थमुद्रणसमयेऽनेको दोषः समजनि, तं परिमृज्याधीयताम् इति प्रार्थ्यन्ते विपश्चितः। अस्मदल्पमतित्वाद् ये दोषाः समजायन्त, तानभिविज्ञाप्योपकुर्वन्तु सुधियः इति विनिवेद्य विरमति—

बहालगढ़े
२६-१-१९८८ ई०

विधेयो
विजयपालः

# संक्षेप-विवरणिका

अष्टा० = अष्टाध्यायी
आ० श्रौ० = आश्वलायनश्रौतसूत्रम्
आप० गृ० = आपस्तम्बगृह्यसूत्रम्
आप० श्रौ० = आपस्तम्बश्रौतसूत्रम्
ऋ० = ऋग्वेदः
ऋक्सर्वा० = ऋक्सर्वानुक्रमणी
ऋ० प्रा० = ऋक्प्रातिशाख्यम्
ऐ० आ० = ऐतरेयारण्यकम्
ऐ० ब्रा० = ऐतरेयब्राह्मणम्
कात्या०सर्वा० = कात्यायनसर्वानुक्रमणी
का० श्रौ० = कात्यायनश्रौतसूत्रम्
का० सं० = काण्वसंहिता
कौ० ब्रा० = कौषीतकिब्राह्मणम्
कौ० सं० = कौथमसंहिता
ताण्ड्य० = ताण्ड्यमहाब्राह्मणम्
तु० = तुलनीयम्
तै० ब्रा० = तैत्तिरीयब्राह्मणम्
तै० सं० = तैत्तिरीयसंहिता
त्रि० = त्रिवेन्द्रम्हस्तलिखितकोशः
द्र० = द्रष्टव्यम्
निरु० = निरुक्तम्
टि० = टिप्पणी
परि० = परिभाषा
पि० छ० = पिङ्गलछन्दःसूत्रम्
पै० सं० = पैप्पलादसंहिता
बृदे० = बृहद्देवता
ब्रा० = ब्राह्मणम्
मा० सं० = माध्यन्दिनसंहिता
मै० १ = मैसूरहस्तलिखितकोशः (प्रथमः)
मै० २ = ,, ,, ,, ,, (द्वितीयः)
या० शि० = याज्ञवल्क्यशिक्षा
श० ब्रा० = शतपथब्राह्मणम्
शौ० सं० = शौनकसंहिता

# पिङ्गलनाग-छन्दोविचिति-भाष्यम्

## प्रथमोऽध्यायः

अथ श्रीयादवप्रकाशविरचितच्छन्दस्सूत्रभाष्यप्रारम्भः[1]—

मयरसतजभनलगसम्मितं भ्रमति वाङ्मय जगति यस्य ।
स जयति पिङ्गलनागः शिवप्रसादाद् विशुद्धमतिः ॥१॥[2]

त्रिगुरुं विद्धि मकारं लघ्वादिसमन्वितं यकाराख्यम् ।
लघुमध्यमं तु[3] रेफं सकारमन्ते गुरु निबद्धम् ॥२॥

लघ्वन्त्यं[4] हि तकारं जकारमुभयोर्लघु विजानीयात् ।
आदिगुरुं च भकारं नकारमिह पैङ्गले त्रिलघुम् ॥३॥

दीर्घं[5] संयोगपरं तथा प्लुतं व्यञ्जनान्तमूष्मान्तम् ।
सानुस्वारं च गुरुं क्वचिदवसानेऽपि लघ्वन्त्यम् ॥४॥[6]

श्रीमत्पिङ्गलमानम्य[7] छन्दश्शास्त्रमहोदधौ ।
वृत्तानि मौक्तिकानीव[8] कानिचिद्विचिनोम्यहम् ॥५॥[9]

ओमित्यादि मन्त्राः । तन्निबन्धनानि प्रायेण वैदिकानि कर्माणि । ते च छन्दस्सु[10] निबद्धाः । छन्दांसि चाविदुषा न मन्त्राः कर्मसु प्रयोक्तव्याः । तथा च ब्राह्मणम्—यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति,[11] गर्तं वा पद्यते[12] प्र वा मीयते पापीयान् भवति । यातयामान्यस्य छन्दांसि भवन्ति । अथ यो मन्त्रे मन्त्रे वेद सर्वमायुरेति श्रेयान् भवति । अयातया-

---

१. 'श्री' नास्ति मै० १, मै० २ कोशयोः । २. श्लोकानां संख्या न निर्दिश्यन्ते कोशे ।
३. 'च' मुद्रिते । ४. 'लघ्वन्तं' कोशे । ५. 'सदीर्घं' कोशे ।
६. अतोऽग्रे 'श्री श्री स्त्रीम्' मै० १ कोशे । ७. 'लनागोक्तच्छ०' मुद्रिते ।
८. 'वार्तिकानीव' कोशे ।
९. पञ्चापीमे श्लोका हलायुधवृत्त्युदये व्युत्क्रमेण समाविष्टाः । नेमे त्रि० कोशे सङ्गृहीताः, अन्त्यश्च मै०२ कोशेऽपि नास्ति । हलायुधकृता इमे श्लोकाः कुलेखकभ्रान्त्येह प्रक्षिप्ता इति प्रतीमः । इतोऽग्रे 'श्री श्री स्त्रीम्' मै० २ कोशे । १०. 'छन्दस्सूत्रे' कोशेषु ।
११. 'वाच्छंति' त्रि० कोशे । १२. 'पद्यति' तिरुपतिमुद्रिते । 'प्र पद्यते' त्रि० कोशे ।

मान्यस्य छन्दांसि भवन्ति । तस्मादेतानि मन्त्रे मन्त्रे विद्यादिति ।[१] स्मर्यते च—

अविदित्वा ऋषिं छन्दो[२] दैवतं[३]योगमेव च ।
योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु सः ॥[४] इति[५] ।

तत इदमशेषछन्दोवृन्दसन्दीपनं[६] शास्त्रमधिक्रियते—

धी श्री स्त्री म्[७] ॥१॥

मिति[८] संज्ञा निर्दिश्यते, 'धी श्री स्त्री' इति[९] गुरुवर्णत्रयं संज्ञि । एतच्च सर्वगुरोर्वर्णत्रयस्योपसंग्रहणायोदाहरणम्[१०] । तेन धीरित्यादेर्वाच्यार्थो[११] न गृह्यते प्रकृतानुपयोगाच्च । तेनेदमुक्तम्—सर्वगुरोस्त्रिकस्य वर्णगणस्य[१२] म इति संज्ञा ॥१॥

वरा[१३] सा य् ॥२॥

आदिलघोस्त्रिकस्य य इति संज्ञा ॥२॥

का गुहा र् ॥३॥

मध्यलघोस्त्रिकस्य र इति संज्ञा ॥३॥

वसुधा स् ॥४॥

अन्त्यगुरोस्त्रिकस्य[१४] स इति संज्ञा ॥४॥

सा ते क्व[१५] त् ॥५॥

अन्त्यलघोस्त्रिकस्य त इति संज्ञा ॥५॥

कदा स ज् ॥६॥

मध्येगुरोस्त्रिकस्य ज इति संज्ञा ॥६॥

किं वद भ् ॥७॥

आदिगुरोस्त्रिकस्य भ इति संज्ञा ॥७॥

---

१. आर्षेयब्रा० १।१।६॥ २. 'ऋषिः छन्दो' मै०१ । 'ऋषिच्छन्दो' त्रि० ।
३. 'देवतं' त्रि० । ४. वृदे० ८।१३६॥ ५. 'इति' नास्ति मै० १, मै० २ ।
६. '०पिनं' मै०२ । ७. '०मिति' त्रि० । ८. 'इति' मै०१, मै०२ ।
९. 'मिति' कोशेषु । १०. 'उप नास्ति' मै०२ पादटिप्पणी ।
११. 'वाच्योर्थो' मै०२ । १२. 'वर्णगणस्य' नास्ति मै०१, मै०२ ।
१३, 'रा' मै० १ । १४. 'अन्त०' मै० १ । १५. 'त्व' मै० १ ।

## न ह्रस नू ॥८॥

सर्वलघोस्त्रिकस्य न इति संज्ञा ॥८॥

## गृ ल् ॥९॥

गृ इति ह्रस्वं वर्णमुपसंगृह्णाति[1]। ह्रस्वो वर्णो ल-इतिसंज्ञो[2] भवति[2]। यथा गृह इत्यत्र ऋवर्णः[3]। अस्यैव अन्यैर्ह्रस्वं लघु[4] इति[5] लघुसंज्ञा प्रोक्ता। सैव संज्ञा सूत्रान्तेन लिति वर्णनोपलक्षिता। तेन ह्रस्वो वर्णो लघुरित्यपि व्याख्यातृभिर्व्यव-ह्रियते[6]। एतेन वक्ष्यमाणस्य[7] गुरुसंज्ञा व्याख्याता ॥९॥

## गन्ते १०॥

गृ[8] इत्यनुवर्तते[9]। श्लोकस्य पादान्ते[10] अर्धान्ते वा क्रियमाणो ह्रस्वो ग-इति संज्ञो भवति[11]। तेनान्ते[12] विहितो[13] गुरुर्ह्रस्वेनापि[14] कृतेन[15] कृतो भवति। ननु यद्यन्ते क्रियमाणो गुरुसंज्ञक एव कथं गीयात्यादीनां[16] लघ्वन्ततया विधानम्? तर्हि तत्र लघुसंज्ञापीष्यते ॥१०॥

## ध्रादिपरः ११॥

गृ[17] इत्यनुवर्तते[18], ग इति च। ध्र[19] इति संयोगो गृह्यते; आदिशब्देन व्यञ्जनं विसर्जनीयोऽनुस्वारश्च। ध्रादयः परे यस्मात् स ध्रादिपरः। ह्रस्वो वर्णः संयोगपरो व्यञ्जनपरोऽनुस्वारपरो विसर्जनीयपरश्च ग्[20] इति परिभाष्यते। ततो विहितो[21] गुरुः एवंविधेनापि कृतेन ह्रस्वेन कृतो भवति। यथा गृध्रेत्यत्र ऋवर्णस्संयोगपरत्वाद्[22] गुरुः। कं कः कं शृणोतीत्यवर्णो[23] व्यञ्जनविसर्जनीयानुस्वारपरत्वाद् गुरुः[24]। हका-

---

१. 'सं नास्ति' मै० २ पादटिप्पणी। २. 'लघुर्भवति' त्रि०।
३. 'गृवर्णः' मै०१। ४. द्र०—अष्टा० १।४।१०॥
५. 'लघ्वीति' त्रि०। ६. 'व्याख्यायते' त्रि०। ७. '०स्य र्' त्रि०।
८. 'गृल्' त्रि०। ९. इदं वाक्यं नास्ति मै० १, मै० २।
१०. 'पदान्ते' मै०१। 'श्लोकस्यान्ते' त्रि०। ११. 'भवतीति' त्रि०।
१२. 'तेनान्तेत्' मै०१। 'तेनान्ते' मै०२। १३. शोधः। 'व्यवहितो' कोशेषु।
१४. '०ह्रस्वेनापि' मै०२। १५. 'ह्रस्वोऽपि कृतो न' मै०१।
१६. द्र०—पि० छ० ४। ४८॥ १७. 'गृल्' त्रि०।
१८. 'ग् इत्यनुवर्तते' मै०२ पादटिप्पणी। १९. 'घ्' मै०२।
२०. 'ग्' नास्ति मै०१। २१. 'विहिते' मै०२। २२. '०परो' त्रि०।
२३. 'नोती०' त्रि०। २४. 'गुरुः' नास्ति त्रि०।

रादौ तु संयोगे[1] परतः क्वचित् पूर्वस्य गुरुत्वं क्वचिन्न गुरुत्वं दृश्यते। यथा—

स्पृष्टास्त्वयेत्यपह्नियः[2] खलु कीर्तयन्ति[3]।

क्वचिद् दृश्यते[4]। यथा—

शतह्रदानां लोलत्वमिति।

तेन तत्र विकल्पः। प्रकृतेऽपि यत्र द्विर्वचनेन सप्रयत्नोच्चारणं नास्ति न तत्र गुरुत्वम्।[5] व्यञ्जनपरस्य कुत्र गुरुत्वम्? न तावत् श्लोकस्य मध्ये[6] परसंयोगेनैव गुरुत्वोपपत्तेः, नाप्यन्ते गन्त इत्येव सिद्धत्वात्। उच्यते[7], गन्त इति यस्य गुरुसंज्ञा तस्य लघुसंज्ञापीष्यत इत्युक्तम्। तदस्य व्यञ्जनपरस्य तेनैव यदि गुरुसंज्ञा, लघुसंज्ञापि स्यात्। ततो गीत्यार्यादीनामन्ते निवेश्यः स्यात्। तन्मा भूदिति केवलैव गुरुसंज्ञा विहिता। एतेन विसर्जनीयपरो व्याख्यातः ॥११॥

हे ॥१२॥

ग् इत्यनुवर्तते। हा च इ ३[8] च हे इति[9] दीर्घप्लुतस्य ग्रहणम्, हा इति दीर्घस्य इ ३[8] इति प्लुतस्य च[10]। दीर्घप्लुतौ ग् इति संज्ञिनौ। यथा—गूहा इत्यत्राऽवर्णः ॥१२॥

अथ संपदुच्यते—

लौ सः ॥१३॥

गिति[11] परिभाषितो वर्णस्स इति परामृश्यते। स मात्राच्छन्दस्सु लौ लघू द्वौ द्वे मात्रे भवतः। स चेत् प्रयुज्येत द्वयोर्मात्रयोः स्थाने स्यात्। ह्रस्वात्मके गुरावेकां मात्रामारोपयति[12]। प्लुतात्मकादेकां त्याजयति[13]। गुरोः द्विमात्रत्वम्[14] ॥१३॥

ग्लौ ॥१४॥

अधिकारोऽयम्। इत आरभ्य आ शास्त्रपरिसमाप्तेः गुरुलघुवर्णावधिकृतौ

---

१. '०ग' मै०२। '०गे' मै०२ पादटिप्पणी। २. '०ह्री०' मै०२।
३. '०न्तीति' त्रि०। ४. 'च' अधिकं त्रि०।
५. '(ननु व्यञ्जनादिपरेत्यनुवर्त्य तत्संज्ञाविधानमनर्थकम्। तद्धि मध्येऽन्ते वा स्यात्। न तावदाद्यः) इत्यधिकम्' इति मै०२ पादटिप्पणी। ६. 'आदौ मध्ये च' त्रि०।
७. 'उच्यते' नास्ति मै०२। ८. 'ई' कोशेषु। ९. 'हेति' मै०१।
१०. 'च' नास्ति त्रि०। ११. 'गीति' मै०१। १२. '०पयन्ति' त्रि०।
१३. '० यन्ति' त्रि०। १४. 'गु...त्वम्' नास्ति त्रि०।

वेदितव्यौ। यत्र विशेषो नोक्तः, तत्रायमुपस्थास्यते। यथा वैदिकेषु च्छन्दस्सु। तेन व्यञ्जनमात्रं न च्छन्दःसंख्यां[1] पूरयति, नाप्यतिरेचयति[2]। सैषा संपत् ॥१४॥

अथ छन्दसां संख्यासंकेतसंज्ञोच्यते[3]—

**अष्टौ वसव इति ॥१५॥**

वसव इत्युक्ते अष्टौ ग्राह्याः। प्रदर्शनार्थं चेदम्। तेन रुद्रा इत्युक्ते एकादश, आदित्या इति द्वादश, समुद्रा इति चत्वारः। संख्येयग्रहणे संख्या ग्राह्या।

धी श्री स्त्री मिति यदाद्यं[4] सूत्रं त्रिविरामं, दशवर्णं स्वरव्यञ्जनभेदेन, षण्मात्रं त्रिभिरीकारैः; तद्वत्[5] त्रिविरामं तेन त्रीन्[6] छन्दोवर्गान् प्रतिपाद्यान् सूचयति—ऋग्जातिवर्गं मात्राजातिवर्गं वृत्तवर्गं चेति। तद्वद् दशवर्णं तेन दशपदार्थान् सूचयति[7]—गणान्[8], संज्ञाः, सपदः[9], देवताः, स्वरान्, गोत्राणि, वर्णान्, गुरुलघुसंज्ञानं, विषमार्धसमसमसंख्यां[10], यतिं च। तद्वत् षण्मात्रं तेन प्रस्तारादीन् षट् प्रत्ययानिति।

अत्र धी श्री स्त्री मित्यादिभिरुदाहरणैस्संज्ञिनो गणाः कथिताः, न लक्षणम्[11]—यथा त्रिगुरुर्म इति[12]। तदिमान्येवोदाहरणानि भविष्यन्तीति सूचयितुम्। तत्र क्वचित् क्वचित्[13] पृथक् पादग्रहणं[14] प्राप्तयति संरक्षणार्थम्[15]। रुक्मवती भ्मौ स्गौ[16] भूतेन्द्रियाणीत्यस्योदाहरणम्[17]—किं वद[18] धी श्री स्त्री वसुधा हेति। अथ समानी ग्लिति[19]—गृध्र गृध्र गृध्रेति। अथ प्रमाणी ग्लिति[20]—गृहे गृहे गृह इति ॥१५॥

**इति यादवप्रकाशस्य कृतौ पिङ्गलनाग-**
**छन्दोविचितिभाष्ये प्रथमोऽध्यायः ॥१॥**

———

१ '०संख्या' मै०१। 'संज्ञां' मै०२। २. 'एतद् वाक्यं नास्ति' मै०२ पादटिप्पणी। ३. मै०१ पादटिप्पणी। 'अथ संख्या च्छन्दसां संकेतसंज्ञोच्यते' कोशेषु। ४. 'यदादिमं' मै० २। ५. 'तद्य' मै० १। ६. 'त्रीन् तेन' त्रि०। ७. 'सूचयति' नास्ति मै०१, मै० २। ८. 'गणाः' कोशयोः। नास्ति त्रि०। ९. 'संपदं वा' त्रि०। १०. '०समासम०' मै० २। '०संख्या' त्रि०। ११. 'न लक्षणम्' त्रि०, मै० २ टिप्पण्यां च। नास्ति कोशान्तरयोः। १२. 'त्रिगुरु मिति' मै० २। १३. नास्ति मै० २। १४. '०ग्रहण०' मै० २। १५. नास्ति मै० २। १६. पि० छ० ६।१२॥ १७. 'णीत्यन्योदा०' मै०१। १८. 'विद' मै० १। १९. द्र०—पि० छ० ५।६॥ २०. तु०—पि० छ० ५।७॥

# द्वितीयोऽध्यायः

छन्दः ॥१॥

अधिकारोऽयमा शास्त्रपरिसमाप्तेः। छन्दोऽस्मिन् शास्त्रेऽधिक्रियत इति वेदितव्यम् ॥१॥

गायत्री ॥२॥

अयमप्यधिकारः। गायत्रीत्यधिकृतं वेदितव्यम् ॥२॥

दैव्येकम् ॥३॥

एकमक्षरं दैवी गायत्री नाम छन्दः ॥३॥

आसुरी पञ्चदश ॥४॥

पञ्चदशाक्षराणि आसुरी गायत्री ॥४॥

प्राजापत्याष्टौ ॥५॥

अष्टावक्षराणि प्राजापत्या गायत्री ॥५॥

यजुषां षट् ॥६॥

षडक्षराणि यजुषां गायत्री ॥६॥

साम्नां द्विः ॥७॥

षडित्यनुवर्तते। द्विष्कृतानि षडक्षराणि, द्वादशाक्षराणीति यावत्, साम्नां गायत्री ॥७॥

ऋचां त्रिः ॥८॥

षडित्येव। त्रिष्कृतानि षडक्षराणि, अष्टादशाक्षराणीति यावत्, ऋचां गायत्री ॥८॥

द्वौ द्वौ साम्नां वर्धेत ॥९॥

द्वौ द्वाविति क्रियाविशेषणत्वाद् द्वितीयाप्रयोगः। साम्नां गायत्र्याः संख्या[1] द्वौ द्वौ वर्णौ वर्धेत, अन्यानि छन्दांसि संपद्यन्ते ॥९॥

त्रींस्त्रीनृचाम् ॥१०॥

ऋचां गायत्र्यास्संख्या त्रींस्त्रीन् वर्णान् वर्धेत; अन्यानि छन्दांसि संपद्यन्ते[2] ॥१०॥

---

१. 'संख्या तु' मै०२। 'संख्याया' त्रि०।

२. 'संख्यायास्त्रयस्त्रयो वर्णा वर्धन्ते' त्रि०।

## चतुरश्चतुरः प्राजापत्यायाः ॥११॥

प्राजापत्यायां गायत्र्यास्संख्या चतुरश्चतुरो[1] वर्णान् वर्धेत, अन्यानि छन्दांसि संपद्यन्ते ॥११॥

## एकैकं शेषे ॥१२॥

शेषं दैवीं गायत्री यजुषां गायत्रीं च। तयोस्संख्या दैवीगायत्र्यादेस्संख्या एकैकं वर्धेत, अन्यानि छन्दांसि संपद्यन्ते[2]। उष्णिगादीनि[3] नामानि भवन्ति। तेन दैव्युष्णिग् द्वयक्षरा दैव्यनुष्टुप् त्र्यक्षरा इत्येकोत्तराणि दैवानि छन्दांसि[4] ॥१२॥

## जह्यादासुरी ॥१३॥

एकैकमित्यनुवर्तते। आसुरीगायत्रीसंख्या एकैकमक्षरं जह्याद्, अन्यानि छन्दांसि संपद्यन्ते ॥१३॥

## तान्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यः ॥१४॥

तानि खलु संपद्यमानानि[5] छन्दांसि उष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीत्येवंनामानि भवन्ति। तेन दैव्युष्णिग् द्वयक्षरा अनुष्टुप् त्र्यक्षरेत्येकैकोत्तराणि दैवानि छन्दांसि[6]। आसुरी उष्णिक् चतुर्दशाक्षरा अनुष्टुप्[7] त्रयोदशाक्षरा इत्येकैकोनान्यासुराणि छन्दांसि। द्वादशाक्षरा प्राजापत्योष्णिक् षोडशाक्षरा अनुष्टुबिति चतुरुत्तराणि प्राजापत्यानि। यजुषामुष्णिक् सप्ताक्षरानुष्टुबष्टाक्षरा[8] इत्येकोत्तरो यजुषां वर्गः। साम्नामुष्णिक् चतुर्दशाक्षरा अनुष्टुप् षोडशाक्षरा इति द्वयुत्तरः साम्नां[9] वर्गः। ऋचामुष्णिगेकविंशत्यक्षरा अनुष्टुप् चतुर्विंशत्यक्षरेति त्र्युत्तर ऋचां वर्गः ॥१४॥

## तिस्रस्तिस्रः सनाम्न्य एकैका ब्राह्मयः ॥१५॥

तिस्रस्तिस्रो गायत्र्यादिनाम्न्यः एकनाम्न्यः[10]। यथा गायत्र्यास्तिस्रः, उष्णिह-

---

१. '०त्र्यासंख्याश्चतु०' मै०१। '०त्र्यासंख्या चधु०' मै० २। 'संख्या' नास्ति त्रि०।

२. 'एकैकं .. संपद्यन्ते' इति पाठः कोशे (मै०१ मै०२) 'दैवानि छन्दांसि' इत्यतोऽनन्तरं लिख्यते। तत्रास्यास्थानत्वमभिसमीक्ष्य यथास्थानमानीतः। ३. '०दीनां' मै० २।

४. 'शेषं दैवीगायत्र्यादेः संख्या एकैकं वर्धेत, अन्यानि छन्दांसि संपद्यन्ते' इत्येतावन्मात्रं भाष्यमुपलभ्यते त्रि० कोशे।

५. 'छन्दांसि उष्णिगादिनामानि भवन्ति। तेन दैव्युष्णिक् त्र्यक्षरा(?) दैव्यनुष्टुप् त्र्यक्षरेत्येकोत्तराणि दैवानि छन्दांसि' इत्यधिकम् इति मै० २ पादटिप्पणी।

६. 'छन्दासि उणिग ··· छन्दांसि' त्रि० कोशमात्रे। ७. 'आसुरी' मै०२ पादटिप्पणी।

८. 'इत्येकैकोना ··· बष्टाक्षरा' नास्ति मै०२। ९. '०त्तरसा०' मै०१ मै०२।

१०. 'एकनामानः' कोशेषु।

स्तिस्रः, अनुष्टुभस्तिस्र, इत्येकैका भूत्वा ब्राह्मचो भवन्ति—ब्राह्मी गायत्री, ब्राह्मी उष्णिक्, ब्राह्मयनुष्टुविति। तद्यथा[1] यजुषामृचां साम्नां च, गायत्र्यं[2] एकभूयं भूत्वा ब्राह्मी गायत्री षट्त्रिंशदक्षरा भवति, तेषामेवोष्णिह एकभूयं भूत्वा ब्राह्मी उष्णिग् द्विचत्वारिंशदक्षरा[3], तेषामेव अनुष्टुभ एकभूयं भूत्वा ब्राह्मयनुष्टुबष्टाचत्वारिंशदक्षरा[4] इत्येवं षडुत्तरो ब्राह्मीवर्गः। तिस्रस्तिस्र एकभूयं भूत्वा ब्राह्मचो भवन्तीति वचनात् संहृतान्येव नित्यमिमानि छन्दांसि भवन्ति। तेन यः षट्त्रिंशदक्षरो मन्त्रः तस्याद्यानि षडक्षराणि यजुषां गायत्रीति विद्यात्, तदनन्तराणि द्वादशाक्षराणि साम्नां गायत्रीति[5], तदनन्तरं यान्यष्टादशाक्षराणि ऋचां गायत्रीति सर्वाणि समुदितानि ब्राह्मी गायत्रीति विद्यात्। एवमुष्णिगादिष्वपि वेदितव्यम्। तेन यजुषां गायत्र्यादयः न पृथक् प्रयुज्यन्ते। केचिदेषां संख्यासामान्याद् यजुर्मन्त्रेषु पृथगिमानि छन्दांसि उपदिशन्ति ॥१५॥

## प्राग्यजुषामार्ष्य इति ॥१६॥

तिस्रस्तिस्रस्सनाम्न्य एकैका इत्यनुवर्तते। यजुषां छन्दोभ्यः प्राग्यानि छन्दांसि दैव्यान्यासुराणि प्राजापत्यानि चोक्तानि तेषां गायत्र्यास्तिस्रस्तिस्र एकभूयं भूत्वा आर्षी गायत्री चतुर्विंशत्यक्षरा संपद्यते। तेषामेवोष्णिह एकभूयं भूत्वा आर्ष्युष्णिगष्टाविंशत्यक्षरा। तेषामेव अनुष्टुभ एकभूयं भूत्वा आर्ष्यनुष्टुब्द्वात्रिंशदक्षरा इत्येवं चतुरुत्तर आर्षवर्गः।

एतेनैवार्षेण वर्गेण[6] सर्वोऽपि[7] वैदिको व्यवहारः। अस्यैव पादविधानम्। एतान्यपि पूर्ववत् संहृतान्येव भवन्ति। तेन यश्चतुर्विंशत्यक्षरो[8] मन्त्रः यथा—अग्निमीडे पुरोहितम्[9] इति, तस्याद्यक्षरमेकं दैवीं गायत्रीं विद्यात्। तदनन्तराणि पञ्चदश[10] आसुरी गायत्रीति। तदनन्तराण्यष्टावक्षराणि प्राजापत्या गायत्रीति। सर्वाणि समुदितानि आर्षी गायत्रीति विद्यात्। एवमुष्णिगादिष्वपि वेदितव्यम्। तदत्रेमौ वैदिकौ श्लोकौ भवतः[11]—

**काश्चित्[12] स्त्रियो द्व्यक्षरमेकविंशतिस्सप्त[13] भूत्वानु भवन्ति कर्मभिः।**
**पञ्चाशतः पञ्च नपुंसकानां द्वे चाधिके बिभ्रति त्र्यक्षराणाम्॥[14]**

---

१. 'यद्यथा' कोशेषु। २. 'गायत्र्या' मै० १।
३. 'द्वाचत्वा०' त्रि०। ४. 'वष्टचत्वा' मै० २। ५. 'ति' नास्ति त्रि०।
६. 'वर्गेण' नास्ति मै० २। ७. 'ऽपि' नास्ति त्रि०। ८. 'यः' नास्ति मै० २।
९. ऋ० १।१।१॥ १०. 'पञ्चदश' नास्ति त्रि०।
११. 'स्तः' मै०२ पादटिप्पणी, त्रि० च। १२. 'कास्वित्' कोशेषु।
१३. '०शस्त्रिसप्त०' त्रि०।
१४. निदानसूत्र १।५॥ तत्रास्य श्लोकस्यायमभिप्रायः प्रतिभाति—एकविंशतिः गायत्र्या-

देवासुराणां छन्दोभिरात्मनश्च प्रजापतिः ।
सप्तवर्गं चकारैकमृषीणां यज्ञवोढवे' ॥[2] इति ॥१६॥

इति भगवतो यादवप्रकाशस्य कृतौ
पिङ्गलनागछन्दोविचितिभाष्ये
द्वितीयोऽध्यायः ॥२॥

---

दयः काश्चित् स्त्रियः (छन्दांसि) सप्त (आर्ष्यः) भूत्वा द्व्यक्षरं, लघुगुरुरूपं प्राप्नुवन्ति, त्र्यक्षरा‍ त्मकगणमध्ये वर्त्तमानानामक्षराणां नपुंसकलिङ्गानां द्विपञ्चाशदुत्तरशतद्वयं बिभ्रति । (तु०—निदानसूत्रवृत्तिः) ।

१. 'वोढवः' कोशेषु ।

२. द्र०—पृष्ठ ८, टि० १४ ।

# तृतीयोऽध्यायः

## पादः ॥१॥

उत्पन्नानि छन्दांसि। अथेदानीं तेषामेव प्रपञ्च आरभ्यते। पाद इत्यधिकारोऽयम्[1] ॥१॥

## इयादिपूरणः ॥२॥

स च पादः दृश्यमानैरक्षरैः शास्त्रीयां संपत्तिमनाप्नुवन्[2] इत्यादिभिः पूरणीयः। यत्र संधिनिमित्तो[3] यकारवकारयोः[4] संयोगो भवति यथा—**दिवः पृथिव्याः पर्योज उद्भृतम्**[5] इति, **द्रवन्नस्सर्पिरासुतिः**[6] इति[7]—तं सयोगम् इय् उव् इति व्यूहेत्[8]। तद्यथा[9]—**दिवः पृथिव्याः परियोज उद्भृतम्** इति, तथा—**द्रुवन्नस्सर्पिरासुतिः** इति। क्वचिदसंधिनिमित्तोऽपि संयोगो व्यूह्यते यथा—**जुष्टो**[10] **होता वरेणिय**[11] इति,तथा—**दिवं गच्छ सुवः पत**[12] इति। तथान्येऽपि वर्णविलोपिनस्सन्धयस्तानपि[13] व्यूहेत्। तद्यथा—**उपेदमुपपर्चनमासु गोषूप पृच्यताम्**[14], **अया सन् हव्यमूहिषे। अया नो धेहि भेषजम्**[15] इति। तथा—**इन्द्र वाजेषु नो अव**[16] इति। तथा—**इन्द्रं सखायोऽनु सं रभध्वम्**[17] इति ॥२॥

## गायत्र्या वसवः ॥३॥

पाद इत्यनुवर्तते। वसवोऽष्टाक्षराणि गायत्र्याः पादः ॥३॥

## जगत्या आदित्याः ॥४॥

---

१. 'ऽयम्' नास्ति त्रि०।

२. 'संख्यमना०' मै० २। 'संख्यासंपत्तिमाप्नु०' मै० २ पादटिप्पणी।

३. 'क्तं' त्रि०। ४. 'यकारादिवकार०' मै० १।

५. मा० सं० २६।५३। तै० सं० ४।६।६।५।

६. ऋ० २।७।६। तै० सं० ४।१।६।२।

७. 'इति' नास्ति मै०१, मै०२।

८. 'व्यूहात्' कोशेषु। ९. 'दिवः ··तद्यथा' नास्ति मै० २। १०. 'प्राणो' कोशेषु।

११. ऋ० ५।१३।४। तै० ब्रा० २।४।१।६।

१२. मा०सं० १२।४। तै० सं० १।४।४३।१।

१३. 'वर्णवि०' मै०२।

१४. ऋ० ६।२८।८। तै० ब्रा० २।८।८।१२।

१५. तै० ब्रा० २।४।१।६।

१६. ऋ० १।७।४। १७. ऋ० १०।१०३।६।

द्वादशाक्षराणि जगत्याः पादः। तावेतौ[1] गायत्रजागतौ[2] पादौ लघुवृत्ती। लघुवृत्तित्वं चोपोत्तमस्याक्षरस्य[3] लघुत्वम्। यथा[4]— **अग्निमीडे पुरोहितम्**[5] इति, **युञ्जते मन उत युञ्जते धियः**[6] इति च ॥४॥

## विराजो दिशः ॥५॥

दशाक्षराणि विराजः पादः ॥५॥

## त्रिष्टुभो रुद्राः ॥६॥

एकादशाक्षराणि त्रिष्टुभः पादः। तावेतौ वैराजत्रैष्टुभौ पादौ गुरुवृत्ती। गुरुवृत्तित्वं चोपोत्तमस्याक्षरस्य गुरुत्वम्। यथा—**पिबा सोममिन्द्र मन्दतु त्वा**[7] इति, **जीमूतस्येव भवति प्रतीकम्**[8] इति च। एष एव[9] गुरुलघुविन्यासो वैदिकेषुच्छन्दस्सु वृत्तिर्वृत्तमिति[10] चाभिधीयते। एष एव[11] सन्देहे निर्णयहेतुः।

अथापरं[12] वृत्तिलक्षणम्। एकादशद्वादशाक्षरयोः पादयोः षष्ठं नवमं चाक्षरं लघ्वेव स्यात्, अष्टमं दशमं च गुर्वेव स्यात्। तथाष्टाक्षरस्य पादस्य पञ्चमाक्षरं[13] लघ्वेव स्यात्, षष्ठं गुर्वेव स्यात्। वैराजस्य पादस्योपान्त्यौ वर्णौ लघुगुरू स्याताम्। सर्वेषु च प्रथमाक्षरादूर्ध्वं लघुद्वयं न स्याद् इति। एतयैव वृत्त्या विभागमृग्यजुषस्य विद्यात्। आचार्येण तु वृत्तिलक्षणं न कथितम्, व्यभिचारस्यापि क्वचिद् दर्शनाद्— **अश्वं न त्वा वारवन्तम्**[14] इत्यादिषु। इहापि[15] सूचितमाचार्येण 'गायत्र्या वसवो जगत्या आदित्या' इति संख्याक्रममुल्लङ्घ्य लघुवृत्त्योर्गुरुवृत्त्योश्च पृथक्करणात्[16], सत्यपि क्वचिद् व्यभिचारे प्रायिकत्वात्[17]। वस्तुतस्तु[18] लक्षणाभावे[19] वृत्तिर्निर्णयहेतुः[20] चक्षुरादय इव विषयाणाम्।

एषामेव चतुर्णां छन्दसां पादैस्सर्वाणि छन्दांसि वर्तन्ते, नान्ये[21] पादास्संभवन्तीति बह्वृचाः। तथा च लिङ्गम्—**एतानि वाव सर्वाणि छन्दांसि यान्येतानि**

---

१. अतोऽग्रे 'तौ' इत्यधिकः पाठ मै०१, मै०२। २. 'गायत्रीजा०' मै०१।
३. '०माक्षर०' मै०२ पादटिप्पणी। ४. 'यथा' नास्ति मै०१, मै०२।
५. ऋ० १।१।१॥ ६. ऋ० ५।८१।१॥ ७. ऋ० ७।२२।१॥
८. ऋ० ६।७५।१॥ ९. 'च' इत्यधिकम् त्रि०। १०. 'वृत्तिवृत्त०' मै०१।
११. 'च' त्रि०। 'तु इत्यधिकम्' मै०२ पादटिप्पणी।
१२. '०रावृत्ति०' त्रि०। 'अथवा०' मै०२ पादटिप्पणी।
१३. 'पञ्चमं सप्तमं चाक्षरं' मै० १, मै० २। १४. ऋ० १।२७।१॥
१५. 'अथापि' त्रि०। १६. '०कार०' मै०१। १७. 'प्रायक०' मै०१।
१८. 'स्वतस्तावल्' मै०१, मै०२। १९. 'लभावेर' त्रि०।
२०. 'वृत्तिरेव निश्चय०' मै०२ पादटिप्पणी। २१. 'नान्येषां' मै० १, मै०२।

**विराट्चतुर्थानि**[१] इति। तथा गायत्रत्रैष्टुभजागतैरेव[२] त्रिभिः पादैः छन्दांसि वर्तन्ते, नान्ये पादाः संभवन्ति[३]। लघुमिश्रवैराजेनेति[४] छन्दोगाः[५]। तथा चैतानि निदर्शनान्युपपन्नानि[६] भवन्ति—**त्रीणि छन्दांसि त्रीणि संवनानि**[७]। तथा गायत्रं जागतं त्रैष्टुभं चानुक्रम्योक्तम्—**एतद् वै यज्ञमापद्य छन्दांस्याप्नोति**[७] इति। आप्तिस्समाप्तिरित्यर्थः। 'तथा—**सर्वाणि छन्दांस्येतस्यामिष्टचाम्**[८] अनूच्यानीत्युक्त्वा **तान्येव**[९] **त्रीणि छन्दांसि संपादयति**[७] इति।

अत्र त्रैष्टुभजागतौ पादौ आ नवाक्षरतायाः[१०] प्रतिक्रामतः, आ पञ्चदशाक्षरतायाः अभिक्रामतः। [आ] अष्टादशाक्षरताया इति बह्वृचाः[७]। गायत्र[११] आ दशाक्षरताया भिक्रामति[१२], आ चतुरक्षरतायाः[१३] प्रतिक्रामति[१२]। पञ्चाक्षरो गुरुवृत्तिर्वैराजः पादः।

अथ किमिदं विराण्नाम[१४] छन्दः? न तावद्[१५] गायत्र्यादिभ्योऽन्यदस्ति, अनुक्तत्वादप्रसिद्धत्वाच्च। तर्हि तेष्वेवैतद् यथायोगमन्तर्भावयामः। या खलु त्रिपदा विराट्, सानुष्टुभमभिसंपद्यते, संख्यासंनिकर्षात्। या चतुष्पदा[१६], सा पङ्क्तिः, या द्विपदैकपदास्ताश्च पङ्क्तिमेव। कथं पुनर्द्विपदैकपदा न्यूनसंख्याः पङ्क्तिमभिसंपद्येरन्? पादार्धर्चजातीयकत्वाद्[१७] इत्याहुः। पादजातीयका ह्येकपदा पादेनैव समा स्यात्। अर्धर्चजातीयकत्वाद् द्विपदार्धर्चेनैव समा स्यात्। पादजातीयकत्वादेवैकपदानामध्यासवशाद् दाशतय्य एकपदा इति यास्क[१८] आचार्यः। यथा[१९] अध्यासाः—**वीहि स्वस्ति सुक्षितिं दिवो नॄन्। द्विषो अंहांसि दुरिता तरेम ता तरेम तवावसा तरेम**[२०]। **वसुं सूनुं सहसो जातवेदसं विप्रं न जातवेदसम्**[२१] इत्यादयो यमकाभासाः पादाः पूर्वस्याः[२२] ऋचः पादा एव, न पृथगृचः। एतमेकपदा अपि—**भद्रन्नो अपि वातय मनः**[२३] इत्येकं

---

१. ऐ० आ० १।३।४॥ २ 'गायत्र्य०' मै०२।
३. 'नान्ये···वन्ति' नास्ति मै०१, मै०२। ४. '०मिश्रा०' मै०२।
५. तु०—निदानसूत्रे १।१॥ ६. 'निमित्तान्यु०' मै०१। 'दर्शनान्यु' त्रि०।
७. मृग्यम्? ८. '०मिश्याम्' मै०१, मै०२। ९. 'एतान्येव' मै०२ पादटिप्पणी।
१०. 'चाक्षरतायां' मै०२। ११. 'गायत्री' मै०१, मै०२।
१२. '०मन्ति' त्रि०। १३. '०तरतायां' मै०१। १४. '०ण्णाम' मै०१।
१५. 'नतात्' मै०१, मै०२। १६. 'सानु··पदा' नास्ति मै०१।
१७. '०र्धर्चजातीजातीयक०' मै०१। '०र्धर्चजागतीक०' त्रि०।
१८. अयमाचार्यो निरुक्तकृतो यास्काद् भिन्नः, अन्यत्र मूलेऽपि स्मृतः।
१९. 'यदा' मै०१। २०. ऋ० ६।२।११॥
२१. ऋ० १।१२७।१॥ २२. 'पूर्वस्य' मै० १। २३. ऋ० १०।२५।१॥

पदं विना स तु पृथगेवेति यास्को मन्यते। अन्ये[1] त्वध्यासानप्येकपदाः प्राहुः। तथा द्विपदानामर्धर्चजातीयकत्वादर्धर्चादिजातिवद्[2] द्विपदा अपि मध्ये अनवसानास्सन्ति। पूर्वया चर्चाध्यासवदुपसमस्यानूच्यन्ते[3] शस्यन्ते च, द्विपदैकपदाः प्रातरनुवाकाश्विनशस्त्रयोः। तस्मात् पादार्धर्चजातीयकास्तैरेव[4] समानसंख्याः[5] स्युः, न तु कृत्स्ना अर्धर्चाः। एतेन गायत्र्यादीनां द्विपदैकपदा व्याख्याताः॥६॥

## एकद्वित्रिचतुष्पादुक्तपादम् ॥७॥

गायत्र्यादीन्युक्तपादानि चत्वारि छन्दांसि स्वैः स्वैः पादैर्यथायोगमेकपाद् द्विपात्त्रिपाच्चतुष्पादिति भवन्ति। तत्र गायत्र्येकपदा[6] द्विपदा त्रिपदा चाष्टाक्षरैः[7] पादैर्भवन्ति, न चतुष्पदा संख्याधिक्यात्। त्रिष्टुब्जगत्यौ एकपदे द्विपदे चतुष्पदे च स्वैस्स्वैर्भवतः[8], न त्रिपदे संख्याहीनत्वात्, न पञ्चपदे संख्याधिक्यात्।

तत्र गायत्र्य एकपदाः[9]—**इन्द्रो विश्वस्य गोपतिः**[10] इति चतस्रस्सूत्रे पठिताः। अथ द्विपदाः—**पवस्व सोम मन्दयन्, इन्द्राय मधुमत्तमः**[11] इति तिस्रः। अथ त्रिपदाः—**अग्निमीडे पुरोहितम्**[12] इत्येवमादयः[13]। सामयोनिषु च—**अग्न आयाहि**[14], **उच्चा ते जातमन्धसः**[15] इत्येवमादयः[16]। तथा जगत्येकपदा[17]—**मदन्ति देवीरमृता ऋतावृधः**[18] इति। अथ द्विपदा—**स नो वाजेष्वविता पुरूवसुः पुरःस्थाता मघवा वृत्रहा भवद्**[19] इति। अथ चतुष्पदाः—**युञ्जते मन उत युञ्जते धियः**[20] इति, **अभि प्रियाणि पवते चनोहितः**[21] इत्यादयश्च। सामयोनिषु च—**विश्वाः पृतनाः**[22] इत्यादयः। अथ त्रिष्टुबेकपदा—**आ वां सुम्ने वरिमन्त्सूरिभिः ष्याम्**[23] इति। अथ द्विपदा—**महि राधो विश्वजन्यं दधानान् भरद्वाजान्त्साञ्जयो अभ्ययष्ट**[24] इति। **अग्ने भव सुषमिधा समिद्ध**[25] इति च[26] सूक्तम्। अथ चतुष्पदाः—**जातवेदसे सुनवाम सोमम्**[27] इत्यादयो दाशतयीषु, सामयोनिषु च भूयिष्ठाश्चतुष्पदास्त्रिष्टुभः। अथ विराडेकपदा—असि-

---

१. 'अन्य' मै० १। २. 'जीति' नास्ति मै० २।
३. '०स्या सूच्यते' मै०१। ४. 'पादर्धर्च०' मै०१। ५. 'समास०' मै०१।
६. 'त्र्यैक०' मै०१। 'त्रैक०' मै०२। 'त्री एक०' त्रि०। ७. 'वाष्टा०' मै०२।
८. '०स्वैः पादैर्भ०' मै० २ पादटिप्पणी। ९. '०त्र्यैक०' मै०१।
१०. आ० श्रौ० ८।२।२१॥ ११. ऋ० ९।६७।१६॥ १२. ऋ० १।१।१॥
१३. 'इत्यादि' मै०१। १४. कौ० सं० १। १५. कौ० सं० ४६७॥
१६. 'इत्यादयः' मै०१। १७. 'गायत्र्येक०' त्रि०। '०त्र्यैक०' मै०२।
१८. आप० श्रौ० ११।१।१९॥ १९. ऋ० ८।४६।१३॥ २०. ऋ० ५।८१।१॥
२१. ऋ० ९।७५।१॥ २२. कौ० सं० ३७०॥ २३. ऋ० ६।६३।११॥
२४. ऋ० ६।४७।२५॥ २५. ऋ० ७।१७।१॥
२६. 'सप्तर्चं इत्यधिकम्' मै० २ टिप्पणी। २७. ऋ० १।९९।१॥

वन्यां यजमानो न होता[१] इति । सिषक्तु नः[२] इति[३]; उरौ देवा[४] इति च । अथ द्विपदा—प्रति नः स्तोमं त्वष्टा जुषेत स्यादस्मे अरमतिवसूयुः[५] इति, वि द्वेषांसीनुहि वर्धयेडाम्[६] इति, स्वायुधास इष्मिणः[७] इति च । अथ त्रिपदा--पिबा सोममिन्द्र मन्दतु त्वा[८], प्रेद्धो अग्ने दीदिहि पुरो नः[९] इति च । अथ चतुष्पदा—अयुज्रन्त इन्द्र विश्वकृष्टीः[१०] इति, स्वस्ति न इन्द्रो वृद्धश्रवाः[११] इति च ।।७।।

आद्यं चतुष्पादृतुभिः ।।८।।

आद्यं छन्दो गायत्री चतुष्पाद्[१२] भवति ऋतुभिः षड्भिः षडक्षरैः[१३] पादैः । तद्यथा--इन्द्रः शचीपतिः, बलेन वीडितः, दुश्च्यवनो वृषा, समत्सु सासहिः[१४] इति । तथा—अपेटि लग्लकं ते पेटाविटकं[१५] ते तत्र किकुबन्धः[१६] तज्जग्धि[१७] परेहि[१८] इति ।।८।।

क्वचित् त्रिपादृषिभिः सा पादनिचृत्[१९] ।।९।।

क्वचिद् गायत्री सप्ताक्षरैः पादैः त्रिपदा भवति । सा पादनिचृदित्युच्यते । यथा[२०]--युवाकु हि शचीनाम्[२१] इति । क्वचिद्ग्रहणमष्टाक्षरैः त्रिपदायाः गायत्र्या अनपवादाय नानल्पत्वात् । भूयस्यो हि पादनिचृतो भवन्ति । तथा हि—इन्द्रः सहस्रदाव्नाम्[२२], अभी षु णः सखीनाम्[२३], आ शर्म पर्वतानाम्[२४], अस्माकं शिप्रिणीनाम्[२५], इन्द्र इन्नो महानाम्[२६], य एकश्चर्षणीनाम्[२७], यो गर्भमोषधीनाम्[२८], त्वन्न इन्द्र वाजयुः[२९] इति पादनिचृतः[३०] ।।९।।

षट्कसप्तकयोर्मध्येऽष्टात्रतिपादनिचृत् ।।१०।।

---

१. ऋ० ४।१७।१५।। २. ऋ० ५।४१।२०।। ३. '०न ऊर्जव्यस्यपुष्टेरिति च' त्रि० । ४. ऋ० ५।४२।१७।। 'ऊर्णो देवा' मै० १ । 'उत देवा' मै० २ । ५. ऋ०७।३४।२१।। ६. ऋ० ६।१०।७।। ७. ऋ० ७।५६।११।। ८. ऋ० ७।२२।१।। ९. ऋ० ७।१।३।। १०. ऋ० १।१६९।२।। ११. ऋ० १।८९।६।। १२. 'चतुष्पादा' मै० १ । 'चतुष्पदा' त्रि० । १३. 'अक्षरैः' मै० १, मै० २, त्रि० । 'चतुर्भिरक्षरैः' इत्यधिकम् मै० २ पादटिप्पणी । १४. मूलं मृग्यम् । १५. 'लिटकं' मै० २ । १६. 'कि कुबद्धः' त्रि० । १७. 'तज्जहि' त्रि० । १८. मूलं मृग्यम् । संदिग्धः पाठः । १९. 'सा पादनिचृत्' इति पृथक्सूत्रत्वेन व्याचख्यौ हलायुधः । २०. 'तथा' कोशेषु । २१. ऋ० १।१७।४।। २२. ऋ० १।१७।५।। २३. ऋ० ४।३१।३।। २४. ऋ० ८।१८।१६।। २५. ऋ० १।३०।११।। २६. ऋ० ८।९२।३।। २७. ऋ० १।७।९।। २८. ऋ० ७।१०२।२।। २९. ऋ० ७।३१।३।। ३०. 'पाद' नास्ति मै० २ ।

षडक्षरसप्ताक्षरयोर्मध्ये यद्यष्टाक्षरः[1] पादः स्यात्, सातिपादनिचृत्। यथा—प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम्। अग्निं रथं न वेद्यम्[2] इति। तथा—प्रेष्ठमु प्रियाणां स्तुह्यासावातिथिम्। अग्निं रथानां यमम्[3] इति।

अथ किमिदं वचनगौरवं षट्कसप्तकयोर्मध्येऽष्टावतिपादनिचृदिति, षट्काष्टकसप्तका अतिपादनिचृदिति उक्तेऽपि निर्देशक्रमात् क्रमः प्रतीयते ? सत्यम्, इदमेवं तर्हि सूचयत्यविवक्षितोऽत्र निर्देशक्रम इति। तथा वक्ष्यामः तृतीयं द्विपाज्जागतगायत्र्याभ्याम्[4] इत्यादिषु[5]॥१०॥

## द्वौ नवकौ षट्कश्च[6] नागी ॥११॥

द्वौ नवाक्षरौ पादौ एकषडक्षरश्च[7] स्यात् सा नागी नाम गायत्री। यथा—ययोरिदं विश्वमेजति ता विद्वांसा हवामहे वाम्। वीतं सोम्यं[8] मधु[9] इति वार्षगण्यानाम्। अस्मिन् सूत्र उत्तरादुत्तरस्मिंश्च निर्देशक्रमो विवक्षितः विपरीता वाराही[10] इत्यादिलिङ्गात्॥११॥

## विपरीता वाराही ॥१२॥

षट्कः प्रथमः अन्त्यौ नवकाविति पूर्वविपरीता वाराही नाम। यथा—वीतं स्तुकेस्तुके, युवमस्मासु नियच्छतम्, प्रप्र यज्ञपतिं तिर[11] इति पाठेनोदाहरणम्॥१२॥

## षट्कसप्तकाष्टकैर्वर्धमाना ॥१३॥

एभिः पादैः वर्धमाना नाम गायत्री। यथा—ईशाना वार्याणां क्ष······षजम्[12] इति। त्वमसि प्रशस्यो विदथेषु सहन्त्य[13] इति च। त्वमग्ने व्यज्ञानाम्[14] इति बह्वृचानाम्[15]॥१३॥

## विपरीता प्रतिष्ठा ॥१४॥

अष्टकस्सप्तकष्षट्क इति पूर्वविपरीता प्रतिष्ठा नाम गायत्री। [यथा—]

---

१. 'यदष्टा०' मै० १। २. ऋ० ८।८४।१॥ ३. ऋ० ८।१०३।१०॥
४. पि० छ० ३।१५॥ ५. 'तथा च' अधिकं मै० २।
६. 'सा' अधिकं मै० २। ७. 'च' नास्ति मै० १।
८. 'सोमं' मै० १। ९. मूलं मृग्यम्।
१०. पि० छ० ३।१२॥ आदिपदेन विपरीता प्रतिष्ठा (पि० छ० ३।१४) इति।
११. तै० आ० ३।११।३१॥ १२. ऋ० १०।९।५॥
१३. ऋ०८।११।२॥ १४. ऋ० ६।१६।१॥ कौ० सं० २।
१५. छन्दोगानाम्? तु०—अत्रैव हलायुधः।

आपः पृणीतं भेषजं व ··दृशे' इति । देवस्त्वा सविता मधु प्राङ्क्तां[2] विश्वचर्षणिः[3] स्फीत्येव नश्वर इति आह्वरकशाखायाम्[4] । त्वमग्ने व्रतपा असि[5] इति च ॥१४॥

## तृतीयं द्विपाज्जागतगायत्राभ्याम् ॥१५॥

क्वचिदित्यनुवर्तते । तृतीयामिति गायत्र्या वसव[6] इति निर्देशापेक्षं विराट्-छन्दसो[7] ग्रहणम् । विराट् क्वचिद् द्विपाद् द्वादशाक्षराष्टाक्षराभ्यां भवति । [यथा --] रायस्कामो वज्रहस्तं सुदक्षिणम्, पित्रो न पितरं हुवे[8] इति । ते नो अर्वन्तो हवनश्रुतो हवम्[9] इति अध्वर्युशाखायाम् । गावो न यूथमुप यन्ति वध्रयः[10] इति । इन्दुरिन्द्राय तोशते [नि तोशते][11] इति च । बभ्रुरेको विषुणः सूनरो, युवाञ्ज्यङ्क्ते हिरण्ययम्[12] इति च[13] सूक्तम् ।

निर्देशक्रमस्य अविवक्षितत्वाद् गायत्रजागताभ्यामपि स्यात् । यथा--अग्ने त्वं नो अन्तम[उत त्राता][14] इति सूक्तम् । आ याहि वनसा सह[15] इति च । अनुष्टुभोऽपि[16] तृतीयमिति निर्देशोपपत्तेः । अनुष्टुबेषा द्विपदा पङ्क्तिरेव[17] इति छन्दोगाः । क्वचित् त्रैष्टुभगायत्राभ्याम्[18]--इमा नु कं भुवना सीषधाम[19] । क्वचित् त्रैष्टुभनवकाभ्याम्--पितुर्न पुत्रः सुभृतो दुरोणः[20] इति । क्वचिन्नवकचतुर्दशकाभ्यां[21] जगती द्विपदा--शं पदं मघं रयीषिणः[22] इति सामयोनिषु । क्वचिद् द्विपदा त्रैष्टुभत्रयोदशकाभ्यां जगत्येव--प्र व इन्द्राय वृत्रहन्तमाय[23] इति सामयोनिषु । क्वचित् षट्कदशकाभ्यां गायत्री--विश्वस्य प्र स्तोभ[24] इति सामयोनिष्वेव । क्वचिज्जागतवैराजाभ्यां जगती विराड् वा--तिग्ममेको बिभर्ति हस्त आयुधम्[25] इति । क्वचिद्वैराजत्रैष्टुभाभ्यां विराड् वा त्रिष्टुब्वा--यज्ञं च नस्तन्वं च प्रजां च[26] इति द्वे, प्रिया नाम हुवे तुराणाम्[27] इति च,

---

१. ऋ० १।२३।२१॥
२. 'पाङ्क्ताम्' मै०१ । 'प्रङ्क्ताम्' त्रि० । सन्दिग्धः पाठः ।
३. '०चिक्षिणीः' मै० १ । 'चर्षणी' मै० २ । 'चर्षणीः' त्रि० ।
४. '०रशा०' मै० १, मै० २ ।
५. ऋ० ८।११।१॥
६. पि० छ० ३।३॥
७. द्र०—पि० छ० ३।५॥
८. ऋ० ७।३२।३॥
९. तै० सं० १।७।८।२॥
१०. ऋ० ८।४६।३०॥
११. ऋ० ९।१०९।२२॥
१२. ऋ० ८।२९॥
१३. 'च' नास्ति मै० १, त्रि० ।
१४. ऋ० ५।२४॥
१५. ऋ० १०।१७२॥
१६. 'आरभो वि' मै० १, मै० २ ।
१७. मूलं मृग्यम् ।
१८. '०त्र्या०' मै० १ ।
१९. ऋ० १०।१५७।१॥
२०. ऋ० ८।१९।२७॥
२१. '०शा०' मै० १, मै० २ ।
२२. कौ० सं० ४४१ ।
२३. कौ० सं० ४४६ ।
२४. कौ० सं० ४५० ।
२५. ऋ० ८।२९।५॥
२६. ऋ० १०।१५७।२॥
२७. ऋ० ७।५६।१०॥

अया वाजं देवहितं सनेम[1] इति च । या पुनः द्विपदैकपदाः एतेषु[2] चतुर्षु छन्दस्सु न प्रयुज्यन्ते, ताः[3] छन्दोऽन्तरमेव[4] कृत्स्नपदार्धचंजातीयकम्[5] । यथा—नूननमथेत्येकपदा[6], अग्निर्ज्योतिर्ज्योतिरग्निः[7] इति द्विपदा ॥१५॥

## त्रिपात् त्रैष्टुभैः ॥१६॥

तृतीयमित्यनुवर्तते, क्वचिदिति च । त्रैष्टुभैः पादैः क्वचित् विराट् त्रिपदा भवति[8] । यथा—अग्निं नरो दीधितिभिररण्योः[9] इति । तथा—पयः पृथिव्यां पय ओषधिषु[10], याभिरदृंहज्जगतः प्रतिष्ठाम्[11] इति चानुष्टुब्वासौ ॥१६॥

## उष्णिग्गायत्रौ जागतश्च ॥१७॥

गायत्रौ द्वौ पादौ जागतश्चैकः उष्णिक् छन्दो भवति ॥१७॥

अत्र विशेषः—

## ककुम्मध्ये चेदन्त्यः ॥१८॥

योऽयमन्त्यो जागतः पादः, स गायत्रयोर्मध्ये चेत् स्यात्[12] सा ककुम्नामोष्णिक् । प्र सो अग्ने तवोतिभिः[13] इति । साम्योनिषु च—प्र मंहिष्ठाय गायत[14], अभ्रातृव्यो अनात्वम्[15] इत्यादयः ॥१८॥

## पुरउष्णिक् पुरतः ॥१९॥

पुरतश्चेज्जागतः पादः स्यात्, सा पुरउष्णिक् । अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तये । देवा भवत वाजिनः[16] इति[17] ॥१९॥

## परोष्णिक् परतः ॥२०॥

परत उपरिष्टाच्चेज्जागतः स्यात्, सा परोष्णिक् । प्र होत्रे पूर्व्यं वचः[18] । अग्ने

---

१. ऋ० ६।१७।१५॥ २. 'च' अधिकं मै० १ ।
३. 'तान्' मै० १, मै० २ । ४. 'तच्च इत्यधिकम्' मै० २ पादटिप्पणी ।
५. '०र्चं इति जातीकाम्' त्रि० । ६. ऐत० ब्रा० ५।२।५।६॥
७. मा० सं० ३।९॥ ८. 'भवतीति' मै० १ । ९. ऋ० ७।१।१॥
१०. मा० सं० १८।३६॥ ११ तै० ब्रा० १।२।१।४॥
१२. 'स्यात्' नास्ति मै० १ । १३. ऋ० ८।१९।३०॥ १४. कौ० सं० १०७॥
१५. कौ० सं० ३९९॥ १६. ऋ० १।२३।१९॥ १७. सूत्रव्याख्या नास्ति मै० २ ।
१८. ऋ० ३।१०।५॥

**वाजस्य गोमतः**[१] इति । **त्वामग्ने मनीषिणः**[२] इति । **आ मित्रे वरुणे वयम्**[३] इत्यादीनि[४] च सूक्तानि । सामयोनिषु च—**पुरु त्वा दाशिवां वोचे**[५], **इन्द्रमिच्छ सुता इमे**[६] इत्यादयः ॥२०॥

## चतुष्पात्पिद्भिः ॥२१॥

सप्तकैः पादैः चतुष्पादुष्णिग् भवति । **नदं व ओदतीनां न ·········ध्यसि**[७] इति । **मंसीमहि त्वा वयम्**[८] इति च ।

कथं पुनः **प्रप्र वस्त्रिष्टुभमिषम्**[९], **अर्चत प्रार्चत**,[१०] **यो व्यतींरफाणयद्**[११] इति तृचाननुक्रम्य **प्रज्ञाता अनुष्टुभश्शंसति**[१२] इति ब्राह्मणम् ? तेषु हि नदं व ओदतीनाम् इति पठ्यते । पादशादृश्यादयं गुणवादः तथा च रहस्यब्राह्मणे दर्शितम्—**नदं व ओदतीनामितो उष्णिगक्षरैर्भवत्यनुष्टुप्पादः**[१३] इति ॥२१॥

## अनुष्टुब्गायत्रैः ॥२२॥

चतुष्पादित्यनुवर्तते । अनुष्टुबष्टाक्षरैः पादैः चतुष्पदा भवति । **त्र्यम्बकं यजामहे**[१४] इति, **गायन्ति त्वा गायत्रिणः**[१५] इत्यादीनि च सूक्तानि । सामयोनिषु च—**विशोविशो वो अतिथिम्**[१६], **पुरोजिती वो अन्धसः**[१७] इत्यादयश्च अनुष्टुभः ॥२२॥

## त्रिपात्[१८] क्वचिज्जागताभ्यां च[१९] ॥२३॥

जागताभ्यां पादाभ्यां चकाराद् गायत्रेण चैकेन[२०] त्रिपदा चानुष्टुप् । यथा—**युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे । इन्द्रवाहा वचोयुजा**[२१] । **मा कस्मै धातमभ्यमित्रिणे नः**[२२] इति । तामेतां कृतिरिति बह्वृचाः[२३] ॥२३॥

## मध्येऽन्ते[२४] च ॥२४॥

एतौ जागतौ पादौ मध्येऽन्ते च स्यातां[२५], गायत्रस्त्वादाविति । किमर्थमिदम्,

---

१. ऋ० १।७६।४॥ २. ऋ० ३।१०।१॥
३. ऋ० ५।७२॥ ४. आदिशब्दः प्रकारे । ५. कौ० सं० ६७॥
६. कौ० सं० ५६६॥ ७. ऋ० ८।६९।२॥ ८. ऋ० १०।२६।४॥
९. ऋ० ८।६९।१–३॥ १०. ऋ० ८।६९।८–१०॥
११. ऋ० ८।६९।१३–१५॥ १२. ऐ० ब्रा० ४।४॥ १३. ऐ० आ० १।३।८॥
१४. ऋ० ७।५९।१२॥ १५. ऋ० १।१०।१ १६. कौ० सं० ८७॥
१७. कौ० सं० ५४५॥ १८. 'त्रिपाच्च' त्रि० । १९. 'च' नास्ति त्रि० ।
२०. 'चैके' मै० १, मै० २ । 'न इत्यधिकम्' मै० २ पादटिप्पणी ।
२१. ऋ० ८।९८।९॥ नास्ति मै० १, मै० २ । २२. ऋ० १।१२०।८॥
२३. तु०—कात्या० सर्वा० परिभाषा ६।३॥ २४. '०न्त्ये' मुद्रित-हलायुधपाठः ।
२५. 'इति' अधिकं त्रि० ।

प्राप्तमेव निर्देशक्रमस्याविवक्षितत्वात्[1] ? सत्यम् । आद्यन्तयोर्जागतौ मा भूतामिति नियमार्थोऽयं योगः । तथात्वे[2] तु पिपीलिकमध्या स्यादिति वक्ष्यति ।

ननु चात्रोक्तस्यापि पिपीलिकमध्यत्वमविरुद्धम्[3], तस्य सर्ववर्णच्छन्दोविषयत्वात्[4] । तर्हीदमेव सूचितम्[5]—न पूर्वोक्तार्थविषये उत्तरयोग इति । तेनेह द्वयोस्तुल्यबलयोः प्राप्तौ पूर्वं बलवत् । यथा शङ्कुमत्यादिषु सूत्रोदाहरणम्—**यास्ते अग्ने सूर्ये रुच उद्यतो दिवमातन्वन्ति रश्मिभिः । ताभिः सर्वाभी रुचे जनाय नस्कृधि**[6] इति ॥२४॥

## बृहती जागतस्त्रयश्च गायत्राः ॥२५॥

जागतः पाद एकः त्रयश्च[7] गायत्राः बृहती छन्दो भवति । त्रय[8] इति ग्रहणं षडक्षरपादाश्चत्वारो मा भूवन्निति दर्शयितुम्; तेऽपि हि गायत्रा भवन्ति गायत्रपादह्रासरूपत्वात् । गायत्रपादा हि विकाररूपा इति विकारपादानां सद्भावस्सूचितो भवति ॥२५॥

तत्र विशेषः—

## पथ्या पूर्वश्चेत् तृतीयः[9] ॥२६॥

योऽयं पूर्वोक्तो जागतस्तृतीयश्चेत् पथ्या नाम बृहती । **ऊर्ध्व ऊ षु णः**[10] इति, **कदा चन स्तरीरसि**[11] इति च । **अयं ते अस्तु हर्यतः**[12] इति सूक्तानि । सामयोनिषु च—**यज्ञायज्ञा वो अग्नये**[13], **अभि त्वा शूर नोनुमः**[14] इत्यादयश्च । एषैव प्रायेण पूर्वा[15] प्रगाथेषु भवति[16] ॥२६॥

## न्यङ्कुसारिणी द्वितीयः ॥२७॥

स एव जागतो द्वितीयश्चेत् न्यङ्कुसारिणी भवति । **मत्स्यपायिते महः पात्रस्येव हरिवो मत्सरो मदः । वृषा ते वृष्ण इन्दुर्वाजी सहस्रसातमः**[17] इति ॥२७॥

## स्कन्धोग्रीवी क्रौष्टुकेः ॥२८॥

एषैव स्कन्धोग्रीवी क्रौष्टुकेराचार्यस्य मतेन ॥२८॥

---

१. 'क्रम' नास्ति मै० २ । २. 'त्वे०' मै० २ ।
३. '०लिका०' मै० २ । ४. 'वर्ण' नास्ति त्रि० । ५. 'सूचकं' त्रि० ।
६. तै० सं० ४।२।९।४॥ ७. 'त्रयश्च' द्विः मै० २ । ८. 'य' मै० १ ।
९. 'तृतीयः पूर्वश्चेत् पथ्या भवति' मै०२ पादटिप्पणी । 'स तृतीयश्चेत् पथ्या बृहती' त्रि० ।
१०. ऋ० १।३६।१३॥ ११. ऋ० ८।५१।७॥ १२. ऋ० ३।४४।१॥
१३. कौ० सं० ३५॥ १४. कौ० सं० २३३॥ १५. 'पूर्वाः' मै० १ ।
१६. 'भवन्ति' मै० १, मै० २ । १७. ऋ० १।१७५।१॥

## उरोबृहती यास्कस्य ॥२९॥

एषैव उरोबृहती यास्कस्याचार्यस्य मतेन ॥२९॥

## उपरिष्टाद्बृहत्यन्ते ॥३०॥

जागत एव पादोऽन्ते चेदुपरिष्टाद्बृहती । **यदर्जुन सारमेय दतः पिशङ्ग यच्छसे । वीव भ्राजन्त ऋष्टय उप स्रक्वेषु बप्सतो नि षु स्वप**[1] इति । **न तमंहो न दुरितम्**[2] इति च सूक्तं त्रिष्टुबन्तम् ॥३०॥

## पुरस्ताद्बृहती पुरतः[3] ॥३१॥

जागत एव पादः पुरतश्चेद् पुरस्ताद्बृहती । **महो यस्पतिः शवसो असाम्या महो नृम्णस्य तूतुजिः । भर्ता वज्रस्य धृष्णोः पिता पुत्रमिव प्रियम्**[4] इति ॥३१॥

## क्वचिन्नवकाश्चत्वारः ॥३२॥

क्वचिन्नवाक्षरैश्चतुर्भिः पादैर्बृहती भवति । **उपेदमुपपर्चनम्**[5] इति । अनुष्टुबियमृगिति बह्वृचाः[6] । **तं त्वा वयं पितो वचोभिः**[7] इति च । **उभावग्नी उपस्तृणत**[8] इति च ॥३२॥

## वैराजौ द्वौ[9] गायत्रौ च ॥३३॥

क्वचिदित्यनुवर्तते । वैराजौ द्वौ पादौ गायत्रौ द्वौ क्वचिद् बृहती भवति । **द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षं समुद्रो योनिः । विख्याय चक्षुषा त्वमभि तिष्ठ पृतन्यतः**[10] इति वाजसनेयके । निर्देशक्रमस्याविवक्षितत्वात् पूर्वौ पादौ गायत्रौ परौ च[11] वैराजौ । **या ते रुद्र शिवा तनूरघोरा**[12] इति तैत्तिरीयके । मध्ये वैराजौ, अभितो गायत्रौ । **युवं ह्यास्तं महो रन्**[13] इति । इमां विष्टारबृहतीति बह्वृचाः[14] । अथ मध्ये गायत्रौ, अभितो वैराजौ । **इन्द्राणीवाविधवा भूयासम्**[15] इति ॥३३॥

## त्रिभिर्जागतैर्महाबृहती ॥३४॥

त्रिभिर्जागतैः पादैर्महाबृहती । **अजीजनो अमृत मर्त्येष्वाँ ऋतस्य धर्मन्नमृतस्य**

---

१. ऋ० ७।५५।२॥ २. ऋ० १०।१२६॥ ३. 'पुरः' मैं० १, मैं० २ । हलायुधवृत्तिसहिते च मुद्रिते । ४. ऋ० १०।२२।३॥ ५. ऋ० ६।२८।८॥ ६. ऋक्सर्वा० ३०।१२॥ ७. ऋ० ११।८७।११॥ ८. तै० ब्रा० ३।७।४।१८॥ ९. 'द्वौ' नास्ति हलायुधवृत्तिसहिते मुद्रिते । १०. मा० सं० ११।२०॥ ११. 'पदं न' मैं० १ । 'परं न' मैं० २ । 'न इति नास्ति' मैं० २ पादटिप्पणी । १२. तै० सं० ४।५।१।१॥ १३. ऋ० ११।१२०।७॥ १४. ऋक्सर्वा० ८।८॥ १५. तै० ब्रा० ३।७।५।१०॥

चारुणः। सदासरो वाजमच्छा सनिष्यदद्[१] इति परश्च प्रश्नः[२]। अभ्यभि हि[३] इति पञ्चर्चश्च। दिवः पीयूषं पूर्व्यं यदुक्थ्यम्[४] ॥३४॥

## सतोबृहती ताण्डिनः ॥३५॥

एषैव सतोबृहती ताण्डिन आचार्यस्य मतेन। बार्हतमिति तृचं[५] सतोबृहतीत्याचक्षते इति[६] छन्दोगाः[७]। तथा च ब्राह्मणम्—वयं घ त्वा, सुतावन्त[८] इति सतोबृहती[६] ॥३५॥

## [१०]पाङ्क्तजागतौ गायत्रौ[११] च ॥३६॥

जागतौ द्वौ पादौ गायत्रौ च[११] द्वौ पङ्क्तिश्छन्दः ॥३६॥

तत्र विशेषः—

## पूर्वौ चेदयुजौ सतःपङ्क्तिः ॥३७॥

याविमौ[१२] पूर्वनिर्दिष्टौ जागतौ तावयुजौ प्रथमतृतीयौ चेत् सतःपङ्क्तिर्नाम पङ्क्तिः। ओजिष्ठं ते मध्यतो मेद उद्भृतम्[१३] इति, इरज्यन्नग्ने प्रथयस्व जन्तुभिः[१४] इति च। य उस्रिया अप्या अन्तरश्मनः[१५] इति च। एतां[१६] सतोबृहतीति बह्वृचाः। तथा च वालखिल्या अधिकृत्य ब्राह्मणम्—ते हैके सह बृहत्यौ सह सतोबृहत्यौ विहरन्ति[१७] इति। एतां सिद्धा विष्टारपङ्क्तिरिति छन्दोगाः[१८]। एषैव प्रायेण प्रगाथानामुत्तरा भवति ॥३७॥

## विपरीता[१९] च ॥३८॥

सतःपङ्क्तिः विपरीता च पङ्क्तिर्भवति। तेन गायत्रावयुजौ जागतौ च युजौ चेति[२०] पङ्क्तिर्भवति। संज्ञा विपरीतेत्येव। यथा—य ऋष्वः श्रावयत् सखा विश्वेत् स वेद जनिमा पुरुष्टुतः। तं विश्वे मानुषा युगेन्द्रं हवन्ते तविषं यतस्रुचः[२१] ॥३८॥

---

१. ऋ० ६।११०।४॥ २. यथाकोशम्।
३. ऋ० ६।११०।५॥ ४. ऋ० ६।११०।८॥
५. 'त्रिचं' मै०१, मै०२। ६. 'इति' नास्ति त्रि०।
७. तु०—निदानसूत्र १।२॥ ८. कौ० सं० २६१।
९. तु०—ताण्ड्य० १२।४।३॥ १०. 'च' नास्ति हलायुधवृत्तिसहिते मुद्रिते।
११. 'च' नास्ति कोशेषु। 'च इत्यधिकम्' मै०२ पादटिप्पणी। १२. 'पादा०' त्रि०।
१३. ऋ० ३।२१।५॥ १४. ऋ० १०।१४०।४॥ १५. ऋ० ६।१०८।६॥
१६. 'एतास्सतो'० मै०१, मै०२। १७. ऐ० ब्रा० ६।२८॥
१८. निदानसूत्र १।३॥ १९. '०रीतौ' मै०२, मुद्रिते च।
२०. 'चेत्' मै०२। २१. ऋ० ८।४६।१२॥

## आस्तारपङ्क्तिः परतः ॥३९॥

तावेव जागतौ पादौ परतः परस्तात् स्याताम् आदौ च गायत्रौ चेदास्तारपङ्क्तिः। यथा—विभ्राजं ज्योतिषा स्वरगच्छो रोचनं दिवः। येनेमा विश्वा भुवनान्याभृता विश्वकर्मणा विश्वदेव्यावता[1], असौ यस्ताम्रो अरुणः[2] इति च। अग्निं न स्ववृक्तिभिः[3] इति सूक्तम्, इन्द्र सोममिमं पिब[4] इति च द्वे सूक्ते ॥३९॥

## प्रस्तारपङ्क्तिः[5] पुरतः ॥४०॥

पुरतश्चेज्जागतौ[6] परतश्च[7] गायत्रौ, प्रस्तारपङ्क्तिः[5]। उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः[8] इति, आ विद्युन्मद्भिः[9] इत्यादयश्च ॥४०॥

## विष्टारपङ्क्तिरन्तः ॥४१॥

अन्तः मध्यश्चेज्जागतावभितो गायत्रौ, विष्टारपङ्क्तिः। अग्ने तव श्रवो वयः[10] इति ॥४१॥

## संस्तारपङ्क्तिर्बहिः ॥४२॥

यदि बहिरादितोऽन्तश्च जागतौ मध्ये गायत्रौ, संस्तारपङ्क्तिः। पितुभृतो न तन्तुमित् सुदानवः[11] इति ॥४२॥

## अक्षरपङ्क्तिः पञ्चकाश्चत्वारः[12] ॥४३॥

पञ्चाक्षराः पादा; चत्वारश्चेद् अक्षरपङ्क्तिः। परि प्र धन्वेन्द्राय सोम[13] इति सूक्तम्। पश्वा न तायुं गुहा चतन्तम्[14] इति षट् सूक्तानि। क ईं व्यक्ता नरः सनीडा[15] इति नवर्चः। प्र शुक्रैतु देवी मनीषा[16] इत्यत्र विंशतिः। कथं पुनः प्र शुक्रैतु देवी मनीषेति[17] वैश्वदेवम्[18] इत्युपक्रम्य ता उ विच्छन्दसस्सन्ति द्विपदा[19] इति ब्राह्मणम्?

---

१. ऋ० १०।१७०।४॥ २. मा० सं० १६।६॥
३. ऋ० १०।२१॥ ४. ऋ० १०।२४,२५॥ ५. 'प्रास्तार०' मै० १।
६. 'जागतौ' नास्ति कोशेषु। ७. '०चेद्' कोशेषु।
८. ऋ० १०।१८।११॥ ९. ऋ० १।१८८।१॥ १०. ऋ० १०।१४०।१॥
११. ऋ० १०।१७२।२॥ द्विपदा विराडिति ऋक्सर्वानुक्रमणी।
१२. 'पञ्चाक्षराश्चत्वारः' त्रि०।
१३. ऋ० ९।१०९॥ द्विपदा विराडिति ऋक्सर्वानुक्रमणी।
१४. ऋ० १।६५-७०॥ ,, ,, ,, । १५. ऋ० ७।५६।१॥
१६. ऋ० ७।३४।१॥ १७. 'अत्र विंशतिः। कथं…षेति' नास्ति मै०१, मै०२।
१८. 'वैश्वदेवम्' नास्ति त्रि०। १९. ऐ० ब्रा० ५।५॥

द्विपदा एवैता इति बह्वृचाः। तथा च द्विपदा इव मध्येऽनवसाय पठन्ति। चतुष्पदास्वेव छन्दोगाः पठन्ति। ब्राह्मणं च—**प्र वाज्यक्षाः**[1] **इत्यक्षरपङ्क्तिः**[2] इति, **पवस्व सोम महान्त्समुद्रः**[3] **इत्यक्षरपङ्क्तिः**[4] इति च ॥४३॥

## द्वावप्यल्पशः ॥४४॥

अक्षरपङ्क्तेरेवाल्पमल्पं क्षीयमाणम् अल्पेन परिमाणेन द्वौ पञ्चाक्षरौ पादौ भवतः। अल्पश इति वचनात् त्रिपदापि भवति। तत्र त्रिपदा—**भगो न चित्रो अग्निर्महोनां दधाति रत्नम्**[5] इति च। अथ द्विपदा—**एवा ह्येव एवा हि पूषन्**[6] इति। एवमन्यान्यपि बह्वृचानां पुरीषपदानि। अपिशब्दादेकपदापि भवति। **अंशु नं शोचिः**[7] इति, **ईशे हि शक्रः**[8] इत्यादयश्च ॥४४॥

## पदपङ्क्तिः पञ्च ॥४५॥

पञ्चाक्षराः पञ्चपादाः पदपङ्क्तिः। यथा—**इन्द्र जुषस्व, आ याहि शूर, पिबा सुतस्य, मध्वश्चकानश्चारुर्मदाय**[9] इति। तथा—**इन्द्र जठरं, पृणस्व मधोः, अस्य सुतस्य, उप त्वा मदास्सुवाचो अस्थुः**[1] इति। तथा—**इन्द्रस्तुराषाट् जघान वृत्रं बिभेद बलम्। ससाहे शत्रून् मदे सोमस्य**[1] इति। एवमेतत् तृचामाद्येषु त्रिषु त्रिषु पादेषु त्रीणि त्रीणि उपसर्गाक्षराणि न तु स्वानीति ब्राह्मणवादेभ्यः। तथा हि—**चतुस्त्रिंशदक्षरास्संस्तुतो भवति**[10] इति स्वतश्चतुस्त्रिंशदक्षरत्वं नास्तीति सूचयति। तथा—**कनीयांसि वै देवेषु छन्दांस्यासन्नित्युपक्रम्यानुष्टुभमभि सं पादयन्ति**[11] इति प्रकृत्याननुष्टुब्निति[12] दर्शयति। तथा—**द्वे वा अक्षरे अतिरिच्येते। षोडशिनोनुष्टुभमभिसंपन्नस्य**[13] इति तदेव सूचयति।

अपि चाथर्वणिका अनुपसृष्टमेवैतत् सूक्तमधीयते[14]। एतेनानुरूपस्तृचो व्याख्यातः[15]। अस्यान्त्यामृचं बह्वृचा अप्यनुपसृष्टामधीयते सामयोनिषु च। संख्याप्रकर्षोऽपीष्यते[16] विराट्स्थानासु विराड्रूपासु च। तत्र **साधुर्न गृध्नुरस्तेव शूरः**[17] इति सा चतुष्पादक्षरपङ्क्तिः ॥४५॥

---

१. कौ. सं. ११६०॥ २. ताण्ड्य १४।५।६॥
३. कौ० सं० ४२६॥ ४. ताण्ड्य १४।११।५॥ ५. कौ०सं० ४४६॥
६. कौ० ब्रा० २३।२॥ कौ० सं०६५० (महानाम्न्य १०)॥
७. कौ० सं० ६४५ (महानाम्न्य ५)॥ ८. कौ० सं० ६४६ (महानाम्न्य ६)
९. आ० श्रौ० ६।३।१॥ १०. ताण्ड्य० १२।१३।२४॥
११. तै० सं० ६।६।११।५॥ १२. 'प्रकृत्यना०' मै०१। १३. ऐ० ब्रा० ४।१॥
१४. '०मभिधी०' मै०१, मै०२। 'भि इति नास्ति' मै०२ पादटिप्पणी।
१५. 'व्याख्यः' मै०१। १६. '०विप्रकर्षो०' मै०१। १७. ऋ० १।७०।११॥

## चतुष्कषट्कौ त्रयश्च ॥४६॥

पञ्चका इत्यनुवर्तते। चतुरक्षरः षडक्षरश्चेति द्वौ पादौ त्रयश्च पञ्चाक्षराः सा पादपङ्क्तिः। **अग्ने तमद्याश्वं न स्तोमैः**[1] इति तिस्रः। आसां प्रथमाया आद्यास्त्रयः पञ्चकाश्चतुर्थश्चतुष्कः पञ्चमः षट्कः। बह्वृचास्त्वाहुः—आद्याश्चत्वारः पञ्चकाः[2] पञ्चमः षट्क इति भुरिक्[3]पदपङ्क्तिर्भवतीति[4]। तद्यथा—**अभिष्टे अद्य**[5] इति, **घृतं न पूतम्**[6] इति च।

चतुष्कषट्काविति योगविभागेन अक्षरपङ्क्तिष्वपि युज्यते। तथा हि[7]—**वि यो वीरुत्सु रोधन् महित्वा**[8] इति। पदपङ्क्तिष्वपि अक्षरपङ्क्तिप्रवादो दृश्यते। **बृहतोरुष्णिहाः पङ्क्तोरक्षरपङ्क्तोरिति**[9] **विषुरूपाणि छन्दांसि**[10] इति। पदपङ्क्तिप्रवादो दृश्यते। **पदपङ्क्तीरुपदधाति**[11] इति। पदपङ्क्तयो गायत्रीविशेषाः संख्यासन्निकर्षादिति बह्वृचाः। पङ्क्तिविशेषा एव ब्राह्मणवादेभ्य इत्याचार्याः। तथा च ब्राह्मणवादाः—**पङ्क्त्यो याज्यानुवाक्या भवन्ति**[12]। **पङ्क्त्यौ याज्यानुवाक्ये भवतः**[13]। **पञ्चाक्षरा पङ्क्तिः**[14]। **अग्ने तमद्येति पङ्क्तया जुहोति**[15] इति संज्ञाभेदः ॥४६॥

## पथ्या पञ्चभिर्गायत्रैः ॥४७॥

पञ्चभिर्गायत्रैः पादैः पथ्या नाम पङ्क्तिः। **अक्षन्नमीमदन्त हि**[16] इति। **यच्चिद्धि सत्य सोमपाः**[17] इत्यादीनि सूक्तानि। सामयोनिषु च—**स्वादोरित्था विषूवतः**[18], **आ ते अग्न ऋचा**[19] इत्यादयः ॥४७॥

## जगती षड्भिः ॥४८॥

गायत्रैरित्यनुवर्तते। षड्भिः गायत्रैः पादैः जगती छन्दो भवति। **अव द्रके अव त्रिका**[20] इति। **असौ योऽवसर्पति नीलग्रीवो विलोहितः**[21] इति च। **एजतु दशमास्यो गर्भो जरायुणा सह**[22] इति च। **उभे यदिन्द्र रोदसी**[23] इति च सूक्तं पङ्क्त्यन्तम्।

---

१. ऋ० ४।१०।१॥ २. 'पञ्चकाः' नास्ति त्रि०। ३. 'भुरिक्' नास्ति मै०२।
४. तु०—ऋ० प्रा० १६।१८॥ ऋक्सर्वा० परि० ४।२॥ ५. ऋ० ४।१०।४॥
६. ऋ० ४।१०।६॥ ७. 'तथापि' मै०२। ८. ऋ० १।६७।५॥
९. 'योग···रिति' नास्ति त्रि०। १०. तै० सं० ५।३।८।२॥
११. तु०—तै० सं० ५।३।८।२॥ १२. तै० सं० १।५।२।१॥
१३. तै० सं० २।३।२।६॥ १४. तै०सं० ६।१।१।६॥
१५. तै०सं० ५।७।४।१॥ १६. ऋ० १।८२।२॥ १७. ऋ० १।२६।१॥
१८. कौ० सं० ४०६॥ १९. कौ० सं० १०२३॥ २०. ऋ० १०।५६।६॥
२१. मा० सं० १६।७॥ २२. मा० सं० ८।२८॥ २३. ऋ० १०।१३४॥

अत्र जगत्याम् अष्टकौ द्वौ सप्तकषट्कदशकनवकाश्च सन्ति पादाः। ते द्वे अपि महापङ्क्तिर्नाम जगतीति बह्वृचाः[1] ॥४८॥

## एकेन त्रिष्टुब् ज्योतिष्मती ॥४९॥

व्याख्यातास्तिस्रस्त्रिष्टुभः – एकद्वित्रिचतुष्पादुक्तपादम्[2] इत्यत्र एकपदा द्विपदा त्रिपदा[3] चतुष्पदा चेति। तासां चतुष्पदा त्रिष्टुबिति परामृश्यते, मध्येज्योतिर्मध्यमेनेति वाक्यशेषाल्लिङ्गात्[4]। चतुष्पदा त्रिष्टुबेकेन गायत्रेण पादेन स्वैश्च त्रिभिर्ज्योतिष्मती[5] नाम भवति ॥४९॥

## तथा जगती ॥५०॥

तथा जगत्यपि चतुष्पदा गायत्रेणैकेनैव[6] स्वैश्च त्रिभिः ज्योतिष्मती नाम भवति ॥५०॥

तत्र विशेषः—

## पुरस्ताज्ज्योतिः प्रथमेन ॥५१॥

प्रथमेन गायत्रेणोत्तरैश्च स्वैः पुरस्ताज्ज्योतिष्मती नाम त्रिष्टुप्। तथा जगती। तत्र तिष्टुप्—आ ते मह इन्द्रोत्युग्र[7] इति। क्रीडन् नो रश्म आ भुवः सं भस्मना वायुना वेविदानः। ता अस्य सन्धृषजो न तिग्माः सुसंशिता वक्ष्यो वक्षणेस्था[8] इति च[9]। अथ जगती—स्तुतं शस्त्रं प्रतिगरं ग्रहमिडामाशिष आ वृञ्जे सुवः। पत्नीसंयाजानुप ते हुवे सवाहं समिष्टयजुरा ददे तव[10] इति[11] ॥५१॥

## मध्येज्योतिर्मध्यमेन ॥५२॥

मध्यमेन गायत्रेणाभितः[12] स्वैः पादैः मध्येज्योतिर्नाम त्रिष्टुप्। तथा जगती।

---

१. द्र०—ऋक्सर्वा० ५७।१९; ६३।१५॥ २. पि० छ० ३।७॥
३. 'त्रिपदा' नास्ति मै०१, मै०२।
४. '०ङ्गा चतु०' मै०१। '०ङ्गाच्चतु०' मै०२। '०ङ्गात् सा चतु०' मै०२ पादटिप्पणी।
५. 'त्रिष्टुप् इत्यधिकम्' मै० २ पादटिप्पणी।
६. 'पादेन इत्यधिकम्' मै०२ पादटिप्पणी। ७. ऋ० ७।२५।१॥
८. ऋ० ५।१९।५॥ विराड्रूपेति ऋक्सर्वा० २५।११॥
९. 'च' नास्ति मै० १। 'प्रथमे ज्योतिर्जगत्युदाहरणम् इत्यधिकम्' मै० २ पादटिप्पणी।
१०. तै० सं० ७।३।११।२-३॥
११. 'इमे त इन्द्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो इति च इत्यधिकम्' मै०२ पादटिप्पणी। १२. '०भिहितः' मै० १।

तत्र त्रिष्टुप्[1]—**एतत् त्यन्न योजनमचेति सस्वर्ह यद्**[2] इति । **प्रतूर्वन्नेह्यवक्रामन्नशस्तोः**[3] इति च । अथ जगती—**तदश्विना भिषजा रुद्रवर्तनी सरस्वती वयति पेशो अन्तरम् । अस्थि मज्जानं मासरैः कारोतरेण दधतो गवां त्वचि**[4] इति । **यद्वा यज्ञं मनवे संमिमिक्षथुः**[5] इति च । **ताभिरा यातं वृषणोप मे हवम्**[6] इति च ॥५२॥

## उपरिष्टाज्ज्योतिरन्त्येन ॥५३॥

अन्त्येन गायत्रपादेन[7] पूर्वैश्च स्वैः[8] उपरिष्टाज्ज्योतिर्नाम त्रिष्टुप् । तथा जगती । त्रिष्टुप्—**तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने**[9] इति[10] । **ऋतावानं महिषं विश्वदर्शतम्**[11] इति । **अग्निनेन्द्रेण वरुणेन विष्णुना**[12] इति सूक्तम् । **अग्नेर्मन्वे प्रथमस्य प्रचेतसः**[13] इत्यनुवाकः । प्रायेण त्रिष्टुव् ज्योतिष्मती विराड्रूपेत्याहुर्बह्वृचाः । तथा—**नवकौ द्वौ वैराजत्रैष्टुभौ च विराट्स्थाननामित्यत्र**[14] त्रिष्टुबित्याहुः ।[15] **श्रुधी हवमिन्द्र मा रिषण्यः**[16] सूक्तमृतेऽन्त्यायाः ।

एवमेतानि सप्त छन्दांसि व्याख्यातानि । एषामन्येऽपि प्रकारा यथासंभवं द्रष्टव्याः । तद्यथा—जागतेनैकेन पादेन चतुर्भिश्चाष्टकैः त्रिष्टुब् भवति । यथा—**नमोवाके प्रस्थिते अध्वरे नरा**[17] इति । एतां महाबृहतीति बह्वृचाः[18] । एवमन्यत्रापि द्रष्टव्यम् ॥५३॥

## एकस्मिन् पञ्चके छन्दः शङ्कुमती ॥५४॥

एकस्मिन् पदे पञ्चाक्षरे सति सर्वं छन्दः[19] शङ्कुमती नाम भवति । सत्यपि छन्दोऽधिकारे पुनर्ग्रहणं प्रकृतत्रिष्टुब्जगतीव्यावर्तनेन छन्दोमात्रप्रतिपत्त्यर्थम् । **पितुं नु स्तोषं······मर्दयद्**[20] इति । तत्राद्यः पादः पञ्चकः, अन्ये त्रयोऽष्टकाः । एषा[21] चोष्णिग्विशेषः, संख्यासन्निकर्षात् । एवमुत्तरत्रापि संख्यासन्निकर्षात् स्वयमेव छन्दो विद्यात् । एतामनुष्टुब्गर्भेति[22] बह्वृचाः[23] । पञ्चकचतुष्कसप्तकत्रैष्टुभैश्च स्यात् ।

१. 'तत्रिष्टुप्' कोशेषु । २. ऋ० १।८८।५॥ विराड्रूपेति ऋक्सर्वा० ६।८॥
३. मा० सं० ११।५॥ ४. मा० सं० १६।८२॥
५. ऋ० ८।१०।२॥ ६. ऋ० ८।२२।१२॥
७. '०त्री०' त्रि० । ८. 'पादैः इत्यधिकम्' मै० २ पादटिप्पणी ।
९. ऋ० ३।२१।४॥ १०. 'जगती इत्यधिकम्' मै० २ पादटिप्पणी ।
११. ऋ० १०।१४०।६॥ १२. ऋ० ८।३५॥ १३. तै० सं० ४।७।१५॥
१४. तु०—ऋक्सर्वा० परि० ६।५॥ १५. 'यथा इत्यधिकम्' मै० २ पादटिप्पणी ।
१६. ऋ० २।११॥ १७. ऋ० ८।३५।२३॥ १८. द्र०—ऋक्सर्वा० परि० ६।६॥
१९. 'सर्वच्छन्दः' त्रि० । २०. ऋ० १।१८७।१॥ २१. 'एष' त्रि० ।
२२. 'शङ्कुमती इत्यधिकम्' मै० २ पादटिप्पणी ।
२३. द्र०—ऋक्सर्वा० परि० ५।७॥

यथा—**शिवा नः सख्या सन्तु भ्रात्रा**[1] इति। एकस्मिन्निति किम्? **कृतं चिद्धि ष्मा सनेमि द्वेषः**[2] इत्यृगेषा मा भूत्। अत्र हि द्वौ पञ्चकौ सप्तको नवकश्च पादाः।[3] पञ्चक इति किम्? **सनितः सुसनितरुग्र**[4] इत्येषा मा भूत्। अत्र हि नवकाष्टकैकादशाष्टकाः पादाः। तामेतां विषमपदेति बह्वृचाः[5] ॥५४॥

## षट्के ककुद्मती ॥५५॥

एकस्मिन् पादे षडक्षरे सति सर्वं छन्दः[6] ककुद्मती नाम भवति। **ता मे अश्व्यानां हरीणां नितोशिना। उतो नु कृत्व्यानां नृवाहसा**[7], इति। अत्र हि षट्कसप्तकैकादशकाः[8] पादाः। तामेतामुष्णिग्गर्भेति बह्वृचाः[9]। तथा—**तव स्वादिष्ठाऽग्ने संदृष्टिः**[10] इत्यत्र पञ्च पञ्चकाः षट्कश्चैकः। तामेतां महापदपङ्क्तिरिति बह्वृचाः[11]। उभयप्राप्तौ पूर्वप्राबल्यात् शङ्कुमत्येव स्यात्, न ककुद्मती। यथा—**वि योजना मिमीध्वमध्वनः स्कभ्नीत काष्ठां गच्छत**[12] इति। अत्र सप्तकषट्कपञ्चकाः पादाः ॥५५॥

## त्रिपादणिष्ठमध्या[13] पिपीलिकमध्या[14] ॥५६॥

यस्यास्त्रिपदायाः मध्यमः पादोऽणिष्ठः अणुतमः सा पिपीलिकमध्या[14]। **हरी यस्य सुयुजा विव्रता वेरर्वन्तानु शेपा। उभा रजी न केशिना पतिर्दन्**[15] इति। अत्र षट्को मध्यमः, अभितः त्रैष्टुभौ। ननु च पूर्वप्राबल्यात् ककुद्मत्येषा स्यात्? नैतत्, अतुल्यबलत्वात्। गुरु हीदं लक्षणं त्रिपादणिष्ठमध्येति चतुर्विशेषणत्वात्। ककुद्मतीलक्षणं लघु एकस्मिन् षट्क इति द्विविशेषणत्वात्। लघुनश्च ग्रहणे गुरुण उदाहरणगतानामेव लक्षणानां विवक्षा[16] स्यात्। तस्मात् पिपीलिकामध्यैषा[17]। तथा—**पर्यू षु प्र धन्व वाजसातये**[18] इत्यत्र तिसृणामृचां मध्यमाः पादाः गायत्रा अभितो जागताः। **अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम्**[19] इत्यत्र मध्ये गायत्रः, अभितः त्रयोदशाक्षरौ। बृहतीविशेषोऽयम्।

---

१. ऋ० ४।१०।८॥ उष्णिगिति ऋक्सर्वा० २१।६॥ २. ऋ० ४।१०।७॥
३. 'भवन्ति इत्यधिकम्' मै० २ पादटिप्पणी। ४. ऋ० ८।४६।२०॥
५. द्र०—ऋक्सर्वा० परि० ७।८॥ ६. 'सर्वच्छन्दः' त्रि०। ७. ऋ० ८।२५।२३॥
८. '०दशाष्टकाः' कोशेषु। ९. द्र०—ऋक्सर्वा० परि० ४।३॥
१०. ऋ० ४।१०।५॥ ११. द्र०—ऋक्सर्वा० परि० ६।२॥
१२. तै० सं० १।७।८।१॥ १३. 'त्रिपदादणि०' मै० १। 'त्रिपदाणि०' मै० २।
१४. 'पिपीलक०' मै० १ सूत्रे। 'पिपीलिका०' मै० १ व्याख्यायाम्।
१५. ऋ० १।१०५।२॥ १६. '०नामर्वि०' मै० १, मै० २।
१७. '०मध्येषा' मै० १। '०मध्येत्येषा' मै० २। १८. ऋ० ९।११०।१॥
१९. ऋ० ८।४६।१४॥

त्रिपादिति किम् ? **अवितासि सुन्वतो वृक्तबर्हिषः**[१] इत्येषा मा भूत्। अत्र हि मध्ये गायत्रः[२], अभितो द्वौ द्वौ जागतौ। अणिष्ठेति किम् ?[३] **अग्निमीडे पुरोहितम्**[४] इत्येषा मा भूत्। इष्ठनो ग्रहणं किम् ? **इदं विष्णुर्वि चक्रमे**[५] इत्येषा मा भूत्। मध्यग्रहणं किम् ? **प्र या घोषे भृगवाणे न शोभे**[६] इत्येषा मा भूत्। अत्र त्रैष्टुभौ द्वौ षट्कश्च ककुद्मत्येषा। तामेतां तनुशिरेति[७] बह्वृचाः[८] ॥५६॥

## विपरीता यवमध्या ॥५७॥

पिपीलिकामध्यायाः[९] विपरीता या त्रिपदैव[१०] महिष्ठमध्या[११] सा यवमध्या[१२]। **स सुन्वे यो वसूनाम्**[१३] इत्यत्र मध्यमो दशकः, अभितः सप्तकौ। त्रिपादिति[१४] किम् ? **सं मा तपन्त्यभितः**[१५] इत्येषा मा भूत्। एषा हि पञ्चपदा। अस्या मध्यमो जागतः, अभितो गायत्राः। **मीढुष्टम शिवतम**[१६] इति च। एषापि विश्वमध्येति[१७] बह्वृचाः[१८]। इष्ठनो ग्रहणं किम् ? **ता विद्वांसा हवामहे**[१९] इत्येषा मा भूत्। अत्र हि मध्यतो[२०] जागतः, अभितो नवकौ। तां काविराडिति बह्वृचाः[२१] ॥५७॥

## न्यूनाधिकेनैकेन[२२] निचृद्भूरिजौ ॥५८॥

एकेनाक्षरेण न्यूनेन निचृद्विशेषणानि छन्दांसि भवन्ति—निचृद्गायत्री निचृदुष्णिगिति, एकेनाधिकेन भूरिग्विशेषणानि—भूरिग्गायत्री भूरिगुष्णिगिति। न न्यूनाधिकाक्षरैः छन्दोऽन्तरं भवतीत्यभिप्रायः। तथा च ब्राह्मणम्—**न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्**[२३] इति। **न ह्येकस्मादक्षराद्वियन्ति**[२४] इति च। **इदं विष्णुर्वि चक्रमे**[२५] इति निचृद्गायत्री। **विद्वांसाविद् दुरः पृच्छेद्**[२६] इति भूरिग्गायत्री। **पितुं न स्तोषम्**[२७] इति भूरिगुष्णिक्। पूर्वमुदाहृतासु सर्वर्क्षु सन्ति निचृद्भूरिजः ॥५८॥

---

१. ऋ० ८।३६।१॥ २. 'अविता ··· किम्' नास्ति मै० २। ३. 'गायत्रौ' त्रि०।
४. ऋ० १।१।१॥ ५. ऋ० १।२२।१७॥ ६. ऋ० १।१२०।५॥
७. 'तनुशिखेति' कोशेषु। ८. द्र०—ऋक्सर्वा० परि० ५।४॥
९. 'पिपीलक०' मै०१ सूत्रे। 'पिपीलिका०' मै० १ व्याख्यायाम्।
१०. '०तायास्त्रि०' मै० १, मै० २। ११. 'असूक्ष्ममध्या' त्रि०।
१२. '०मध्या न सूक्ष्ममध्या' मै०१, मै० २। १३. ऋ० ९।१०८।१३॥
१४. 'त्रिपदादिति' मै० १, मै० २। १५. ऋ० १।१०५।८॥
१६. मा० सं० १६।५१॥ १७. यथाकोशम्! 'यव इति पाठः' मै०२ पादटिप्पणी।
१८. मृग्यम्। १९. ऋ० १।१२०।३॥ २०. 'मध्यमो' मै०२ पादटिप्पणी।
२१. द्र०—ऋक्सर्वा० परि० ६।५॥ २२. 'ऊना०' हलायुधव्याख्यासहिते मुद्रिते।
२३. ऐ० ब्रा० १।६॥ २४. तु०—श० ब्रा० ७।१।२।२२; १२।२।३।३॥
२५. ऋ० १।२२।१७॥ २६. ऋ० १।१२०।२॥ २७. ऋ० १।१८७।१॥

## द्वाभ्यां विराट्स्वराजौ ॥५९॥

द्वाभ्यामक्षराभ्यां न्यूनाभ्यां[1] विराड्विशेषणानि छन्दांसि भवन्ति—विराड्गायत्री विराडुष्णिगिति, द्वाभ्यामेवाधिकाभ्यां स्वराड्विशेषणानि भवन्ति—स्वराड्गायत्री स्वराडुष्णिगिति । याः[2] खल्वृचः षड्विंशत्यक्षरास्ताः स्वराड्गायत्र्यो भवन्ति विराडुष्णिहो वा । यथा—**क्रतं चिद्धि ष्मा सनेमि द्वेषः**[3] इति यास्त्रिंशदक्षराः ताः स्वराडुष्णिहो विराडनुष्टुभो वा । यथा—**ता विद्वांसा हवामहे वाम्**[4] इति । एवमन्यत्रापि द्वयोश्छन्दसोर्मध्यगता ऋचः पूर्वं वा छन्दः स्वराड्विशेषणम्, उत्तरं वा विराड्विशेषणमिति विद्यात् ॥५९॥

## आदितस्सन्दिग्धे ॥६०॥

या द्वयोश्छन्दसोर्मध्यगता ऋचः समा वृत्तिपादाक्षरैः किंस्वित् पूर्वं छन्द आहोस्विदुत्तरमिति सन्देहे निर्णय उच्यते । ननु सन्देह एव नास्ति, द्वयोर्जात्योस्साधारण्यस्ता इति[5] । तथा च ब्राह्मणं साधारणत्वं दर्शयति—**जागतो वाऽतिजागतो वा**[6] इत्युक्तम् । सत्यमेवेदं, तथापि यत्रान्यतरन्निर्णेतुं शक्यते तच्छन्दस्तदेव तत्र प्रतिपत्तव्यम् । यत्र विशेषहेतुर्नास्ति तत्र पूर्वं वोत्तरं वा विकल्पेनानुचिन्तनीयम् । तत्रायं[7] निर्णयहेतुरुक्त आदित इति । सूक्तेषु वा, अनुवाकेषु वा, सामयोनिषु वा येन छन्दसोपक्रमः, यद्वा छन्दः प्रायिकं भवति तदेव[8] छन्दःसन्देहेषु निश्चेतव्यम् । यथा—**यूपव्रस्का उत ये यूपवाहाः**[9] इति त्रिष्टुप्छन्दःसमुदाये पाठात् त्रिष्टुबेव[10], **ये वाजिनं परिपश्यन्ति पक्वम्**[11] इति च । योनिवदुत्तरयोर्जातिः ॥६०॥

## देवतादिभ्यश्च[12] ॥६१॥

देवतादिभ्यश्छन्दोहेतुभ्यस्सन्दिग्धं निर्णेतव्यम् । आदिशब्देन वृत्तिपादसंख्यानां पूर्वोक्तानां ग्रहणम् । कथं पुनर्देवता निर्णयहेतुः ? द्विविधो हि निर्णयहेतुः—अव्यभिचारी कश्चित्, लिङ्गतया धूम इवाग्नेः, व्यभिचार्यपि कश्चित् प्रायिकत्वाद्, अप-

---

१. 'न्यूनाभ्यां' त्रि० मात्रे । २. 'या याः' मै०१, मै० २ ।
३. ऋ० ४।१०।७॥ ४. ऋ० १।१२०।३॥
५. 'ह्युक्तम् इत्यधिकम्' मै०२ पादटिप्पणी । ६. ऐ० ब्रा० ६।३०॥
७. 'तत्रायं' नास्ति मै० १ ।
८. 'तथा च ·· तदेव' इति पाठस्य स्थाने—'सत्यम् । एवं तथाप्यादितस्तत्रान्यतरन्निर्णेतुं शक्यते । पूर्वं छन्दः प्रायिकं भवति । तदेवं' इति पाठ उपलभ्यते त्रि० ।
९. ऋ० १।१६२।६॥ १०. जगतीति ऋक्सर्वा० ११।५॥
११. ऋ० १।१६२।१२॥ १२. 'देवतादितश्च' हलायुधव्याख्यासहिते मुद्रिते ।

वादाभावे चक्षुरादय इव विषयाणाम्, वृत्त्यादय इव छन्दसाम्। न तावद् देवता निर्व्यभिचारं[1] लिङ्गं, नापि प्रायिकम्। कथमेषा[2] निर्णयहेतुरिति ? बाढम्। न देवता निर्णयहेतुरुच्यते, किन्तु सन्देहेषु विशिष्टदेवतादर्शने विशिष्टछन्दोऽनुचिन्तनीयमित्य-दृष्टार्थोऽयं विधिः।

तत्र देवता वक्ष्यते[3]। [4]वृत्तेस्तावन्निर्णय उच्यते। यथा—**त्वमग्ने रुद्रो असुरो-महो दिवः**[5] इति ऋगेषा जगती, न त्रिष्टुप्। अथ पादैः—**ऋषभोऽसि शाक्वरो घृता-चीनां सूनुः। प्रियेण नाम्ना प्रिये सदसि सीद**[6] इति। अत्र वृत्तिसंख्याभावेऽपि परो-ष्णिह इव पादा भवन्ति। अथाक्षरसंख्यया—[9]**यो वाचा विवाचो मृध्रवाचः···शवः**[7], **के ते नर इन्द्र ये त इषे**[8] इति च द्वे। अत्र द्वौ वैराजौ पादौ द्वौ च जागतौ। ततो विरा-ड्जगत्योः साम्यात् सन्देहेनाक्षरसंख्यया[9] त्रिष्टुबिति गम्यते। एतामभिसारिणी-मिति[10] बह्वृचाः[11]। सर्वेभ्यः संख्या गरीयसीति बह्वृचाः[12]। वृत्तिर्गरीयसीति छन्दोगाः[13]। पूर्वप्राबल्यादिर्गरीयसीति पैङ्गलाः[14] ॥६१॥

## अग्निः सविता सोमो बृहस्पतिर्मित्रावरुणाविन्द्रो विश्वेदेवा देवताः ॥६२॥

गायत्र्यादीनां क्रमादग्न्यादयो देवताः। तथा च मन्त्रवर्णः—**अग्नेर्गायत्र्यभवत् सयुग्वोष्णिहया सविता सं बभूव**[15] इति द्वे ऋचौ। अत्र मित्रावरुणौ विराजो देवता **विराण्मित्रावरुणयोः**[16] इति वचनात्, विराट् त्रिंशदक्षरा पङ्क्त्यन्तर्भूता गृह्यते, **मित्रावरुणौ पङ्क्त्येन्द्रस्त्रिष्टुभा**[17] इति ब्राह्मणदर्शनात्। परिशिष्टायाः पङ्क्तेश्च त्रिष्टुभश्चेन्द्र एव देवता, वासवी पङ्क्तिरिन्द्रस्य त्रिष्टुब्[15] इति दर्शनात्।

तत्र या ऋचो गायत्री वोष्णिग्वेति सन्दिह्यन्ते ता यद्याग्नेय्यो[18] गायत्र्य इत्यनु-चिन्तनीयाः। यथा—**कृतं चिद्धि ष्मा सनेमि द्वेषः**[19] इति। यदि सावित्र्यः, उष्णिह इत्य-नुचिन्त्याः[20]। तद्यथा—**अनागसो अदितये देवस्य**[21] इत्यृक्। **यास्ते सोम प्रजा वत्सोऽभि**

१. '०चारि' त्रि०। २. '०मेषां' मै०१, मै०२। '०मेष' त्रि०।
३. 'वक्ष्यते' मै०१, मै०२। ४. 'तत्र इत्यधिकम्' मै०२ पादटिप्पणी।
५. ऋ० २।१।६॥ ६. तै० ब्रा० ३।७।६।१०॥ ७. ऋ० १०।२३।५॥
८. ऋ० १०।५०।३,४॥ ९. 'यो···संख्यया' नास्ति मै० १।
१०. '०णीति' त्रि०। ११. द्र०—ऋक्सर्वा० परि० ६।४॥
१२. द्र०—ऋक्प्राति० १७ २१॥ १३. द्र०—निदानसूत्र १।६॥
१४. द्र०—पि० छ० ३।६०॥ १५. ऋ० १०।१३०।४,५॥
१६. ऋ० १०।१३०।५॥ १७. ऐ० ब्रा० ८।६॥ १८. '०ग्नेये' मै०१, मै०२।
१९. ऋ० ४।१०।७॥ पदपङ्क्तिरुष्णिग्वेति ऋक्सर्वा०२१।६॥ तथैवान्यत्रापि भेदः प्रायेण।
२०. '०न्त्यः' कोशेषु। २१. ऋ० ५।८२।६॥

सो अहम्। दुस्स्वप्नहन् दुरुष्वहा[1] इत्यनुष्टुप्। यस्ते द्रप्सः स्कन्दति यस्ते अंशुः[2] इति बृहती बृहस्पतिसंबन्धात्[3]। अव वेदिं होत्राभिर्यजेत[4] इति द्वे विराजौ, एष स्तोमो वरुण मित्र तुभ्यम्[5] इति च मैत्रावरुणत्वात्। प्रदातारं हवामह इन्द्रमा हविषा वयम्[6] इति पङ्क्तिः, ऐन्द्रत्वात्। संक्रन्दनेनानिमिषेण जिष्णुना[7] इति त्रिष्टुप्, ऐन्द्रत्वात्। शुभ्राः कन्या युवतयः सुपेशसः[8] इति जगती वैश्वदेवत्वाद् इत्यादि द्रष्टव्यम्।

अन्येषामपि छन्दसां श्रुतौ दैवतं व्याख्यातम्। तदप्यदृष्टायानुचिन्तनीयम्। तद्यथा—प्राजापत्या अतिछन्दसः। विछन्दसो वायुदेवताः। पुरुषो द्विपदानां दैवतम्। ब्राह्मच एकपदाः स्मृताः[9] इति। विछन्दस इति पादैः वृत्त्या च विरूपाणि[10] विषमाणि छन्दांसि। तथा च ब्राह्मणम्—ता उ विछन्दसः सन्ति विराजः[11] इति ॥६२॥

## स्वराः षड्जादयः ॥६३॥

सप्ताना छन्दसां षड्जादयः सप्त स्वराश्चिन्तयितव्याः—षड्जऋषभगान्धारमध्यमपञ्चमधैवतनिषादा[12] इति। अपर आह—देवतावत् स्वरा अपि छन्दोविशेषप्रतिपत्त्यर्थाः, गोत्राणि च तथा—देवतादिभ्यश्च[13] इत्यत्रादिशब्देन[14] संगृह्यन्ते। यस्याः[15] खल्वृचः षड्जस्वरो बहुलो भवति तां गायत्रीति विद्यात्। स्वरयोगः छन्दसां[16] सामनिबन्धनः साम्नां सप्तस्वरत्वात्। अथवा—उच्चौ निषादगान्धारौ नोचावृषभधैवतौ। शेषास्तु स्वरिता ज्ञेयाः षड्जमध्यमपञ्चमाः ॥[17] गोत्रयोगस्तु मन्त्रदृशामृषीणां गोत्रयोगेनेति। अदृष्टार्थ[18] एव स्वराद्युपदेश इत्याचार्याः ॥६३॥

## आग्निवेश्य-काश्यप-गौतमाङ्गिरस-भारद्वाज-कौशिक-वासिष्ठानि[19] गोत्राणि ॥६४॥[20]

सप्तानां छन्दसां सप्तेमानि गोत्राणि चिन्तयेत्। ६४।

---

१. तै० आ० १०।४८।१॥ २. ऋ० १०।१७।१२॥
३. 'बृहतीसं०' मै० १, मै० २। तु०—ऋ० १०।१३०।४॥ ४. ऋ० ७।६०।६॥
५. ऋ० ७।६४।५; ७।६५।५॥ ६. तै० मं० १।७।१३।४॥
७. ऋ० १०।१०३।२॥ ८. तै० ब्रा० ३।१।२।४॥ ९ मृग्यम्।
१०. 'विश्वरूपाणि' मै० १, मै० २। ११. ऐ० ब्रा० ५।५॥
१२. '०पञ्चमध्यम०' मै० १। १३. पि० छ० ३।६१॥ १४. '०दित्य०' मै० १।
१५. 'यद्यस्याः' मै० १, मै० २। १६. '०योगश्छन्द०' कोशेषु।
१७. या० शि० १।७॥ १८ 'अत्र दृष्टार्थं' मै० १, मै० २।
१९. 'आग्निवैश्य०' '०वाशिष्ठ०' मै० १, 'अग्नि०' '०वाशिष्ठ०' मै० २, 'वैश्व०' त्रि०। 'अग्निवेश्य [अग्निवेशम]' मुद्रिते हलायुधव्याख्यासहिते।
२०. एतत् सूत्रमन्त्यं सितेत्यादि चोपान्त्यं हलायुधव्याख्यासहिते मुद्रिते।

## सितसारङ्गपिशङ्गकृष्णलोहितनीलसुवर्ण-गौरा[१] वर्णाः ॥६५॥

सप्तानां छन्दसामेतेऽष्टौ वर्णाः। तत्र उष्णिग्विशेषस्य ककुभस्तृतीयो वर्णः। तथा च स्मृतिः[२]—शुक्ला[३] गायत्र्यो रूपेण सारङ्गं रूपमुष्णिहाम्। पिशङ्गं ककुभां रूपं कृष्णमनुष्टुभां मतम्[४]॥ लोहितं[५] बृहतीनां तु[६] नील पाङ्क्तगतं[७] पुनः। सुवर्णं त्रिष्टुभां रूपं[८] गौरं जागतमुच्यते[९] इति[१०] ॥६५॥

## श्यावान्यन्यानि छन्दांसि ॥६६॥[११]

अतोऽन्यानि[१२] सर्वाणि छन्दांसि श्यावानि। तथा च श्रुतिः[१३]—अतो[१४] अन्यानि यानि छन्दांसि श्यावं तेषां ततः पुनः[१५] इति। तत्र विशेष उक्तः—नकुलं[१६] चैकपादानां द्विपदां बभ्रुरुच्यते। सारङ्गशुक्लकृष्णरूपाणि ऋग्यजुःसामब्राह्मणानि न्विति[१७] इति[१७]। केचित् तु निचृच्छन्दसं गौरीमाहुः[१८], भूरिजां[१९] पृषतीं, विराजां पृश्नि, यजुषां साम्नामृचां ब्राह्मणश्च[२०] गायत्र्यादीनि[२०] कपिलानीति ॥६६॥

## रोचनाभाः कृतयः ॥६७॥

कृतयो वक्ष्यमाणा रोचनाभाः[२१] गोरोचनाभा[२२] ध्येयाः ॥६७॥

## अनुक्तानां कामतो वर्णाः इति ॥६८॥

अनुक्तानां दैवीगायत्र्यादीनां[२३] यथेच्छं वर्णाश्चिन्तनीयाः। देवताज्ञानं छन्दो-

---

१. '०कृष्णनीललोहितगौरा' हलायुधव्याख्यासहिते मुद्रिते।
२. 'श्रुतिः' मै० १, मै० २। ३. 'शुक्ल्या' मै० १, मै० २।
४. 'मतम्' नास्ति मै० १। 'कृष्ण ' हतः' त्रि०। ५. 'रोहितं' त्रि०।
६. 'तु' नास्ति मै० १। ७. 'पाङ्क्त्यं' मै० १।
८. 'सारङ्ग...रूपं' नास्ति मै० २। ९. मूलं मृग्यम्। '०ती' मै० १, मै० २।
१०. 'इति' नास्ति मै० १, मै० २।
११. एतदादीनि सूत्राणि, तद्व्याख्या च न सन्ति मुद्रिते।
१२. 'ततो०' मै० १, मै० २। 'छन्दांसि' इत्यधिकं मै० १, मै० २।
१३. यथाकोशम्। 'स्मृतिः' युज्येत ? १४. 'अत्र' मै० १, मै० २।
१५. मृग्यम्। १६. 'नकुलि' मै० २। १७. '०णान्विता इति' मै० १, मै० २।
१८. 'गौरवमाहुः' मै० १। १९. 'भूरुजां' मै० १, मै० २।
२०. यथाकोशम्! २१. 'रोचनाभाः' नास्ति त्रि०।
२२. 'गो...भाः' नास्ति मै० २। २३. '०त्रीत्या०' त्रि०।

निर्णयार्थमदृष्टार्थं च, स्वरादीनां ज्ञानमदृष्टार्थमेव । स्वरादयोऽप्यवश्यं विद्वद्भिः प्रतिपत्तव्याः । तथा निर्वचनमपि श्रुतावुक्तम्--अथातो निर्वचनम् । गायत्री गायतेः स्तुतिकर्मण[1] इत्यादिना । तदपि यथाश्रुत्येव विद्यात् ॥६८॥

इति भगवतो यादवप्रकाशस्य कृतौ
पिङ्गलनागछन्दोविचितिभाष्ये
तृतीयोऽध्यायः ॥३॥

---

१. मृग्यम् । तु०—निरु० ७।१२॥

# चतुर्थोऽध्यायः

अथ चतुर्दशातिच्छन्दांसि व्याख्यायन्ते[1]—

**चतुश्शतमुत्कृतिः ॥१॥**

चतुरधिकं शतं चतुःशतम् । शतमक्षराणि चत्वारि चोत्कृतिर्नाम छन्दः[1] ॥१॥

**चतुरश्चतुरस्त्यजेदुत्कृतेः ॥२॥**

उत्कृतेर्वर्णांश्चतुरश्चतुरस्त्यजेत्, अन्यानि छन्दांसि संपद्यन्ते ॥२॥

**तान्यभिसंव्याप्रेभ्यः कृतिः ॥३॥**

तानि छन्दांसि अभि सं वि आ प्र इत्येतेभ्यः[2] उपसर्गेभ्यः परः कृतिशब्दः, स एषां वाचकः—अभिकृतिः, संकृतिः, विकृतिः, आकृतिः, प्रकृतिरिति । तत्र उत्कृतेश्चतुर्णां[3] त्यागादभिकृतिश्शताक्षरा[4], संकृतिः षण्णवत्यक्षरा, विकृतिर्द्विनवत्यक्षरा[5], आकृतिरष्टाशीत्यक्षरा, प्रकृतिश्चतुरशीत्यक्षरा ॥३॥

**प्रकृत्या च[6] ॥४॥**

कृतिशब्दोऽयं प्रकृत्या[7] निरुपसर्गश्च[8] छन्दसो वाचकः—कृतिरिति । कृतिरशीत्यक्षरा ॥४॥

ता एतास्सप्त कृतय[9] एकोऽतिच्छन्दसां वर्गः । अथासामन्यस्सप्तको[10] वर्गः[11]—

**धृत्यष्टिशक्वरीजगत्यः ॥५॥**

कृतिमधोऽधो धृत्यष्टिशक्वरीजगत्यः स्युः ॥५॥

तत्र विशेषः—

---

१. सूत्रोत्थानिका व्याख्या च मै० २ पादटिप्पणीमात्रे, नान्यत्र कोशे ।
२. 'पञ्चभ्यः इत्यधिकम्' मै० २ पादटिप्पणी ।
३. '०तेश्चचतुः०' मै० १ । 'वर्णानां इत्यधिकम्' मै० २ पादटिप्पणी ।
४. 'संपद्यते इत्यधिकम्' मै० २ पादटिप्पणी ।
५. '०द्विर्नव०' मै० १, मै० २ ।
६. 'चोपसर्गवर्जितः' हलायुधव्याख्यासहिते मुद्रिते ।
७. 'तिः' मै० १, मै० २ ।
८. '०र्गस्य' त्रि० ।
९. 'प्रकृतय' मै० १ ।
१०. 'अथ सामान्य०' मै० १, मै० २ ।
११. 'वर्णाः' मै० १ ।

पृथक् पृथक् पूर्वतः एतान्येवैषाम् ॥६॥

एतानि धृत्यादीनि नामानि, एषामेव धृत्यादीनां पूर्वतः[1] पुरस्ताद् भवन्ति। तानि च न सर्वेभ्यः पुरस्ताद् भवन्ति[2], किन्तु मध्ये मध्य एव। पृथग् पृथगेकैकस्य पुरस्तादेकैकं भवति—अतिधृतिः धृतिरत्यष्टिरष्टिरतिशक्वरी शक्वरी अतिजगती जगतीति ॥६॥

द्वितीयं द्वितीयमतितः ॥७॥

यदेतेषां पुरस्ताद् द्वितीयं द्वितीयं नाम कृतं तदतिशब्दात् परं भवति—अतिधृतिर्धृतिः, अत्यष्टिरष्टिः, अतिशक्वरी शक्वरी, अतिजगती जगतीति। तत्रातिधृतिः षट्सप्तत्यक्षरा, धृतिर्द्विसप्तत्यक्षरा[3]। अत्यष्टिरष्टाषष्ट्यक्षरा[4], अष्टिश्चतुष्षष्ट्यक्षरा। अतिशक्वरी षष्ट्यक्षरा, शक्वरी षट्पञ्चाशदक्षरा। अतिजगती द्विपञ्चाशदक्षरा, जगती पूर्वमेवोक्ता। नेयमतिछन्दाः। अतिजगत्यर्थं पुनरिहोक्ता। एताश्चतुर्दशातिजगत्यादयोऽतिछन्दसः।

तत्रातिजगती—तमिन्द्रं जोहवीमि मघवानमुग्रम्[5] इति। दृष्ट्वा परिस्रुतो रसम्[6] इति च, शक्वरी वा। अयं सहस्रमानव[7] इति शक्वरी, अतिशक्वरी वा शाखान्तरे। प्र वो महे मतयो यन्तु विष्णवे[8] इति सूक्तम्।

अथ शक्वरी—प्रो ष्वस्मै पुरोरथम्[9] इति। तच्छंयोः[10] इति च। अवितासि सुन्वतो वृक्तबर्हिषः[11] इति सूक्तं महापङ्क्त्यन्तम्।

अथातिशक्वरी[12]—या ते अग्ने यज्ञिया तनूस्तयः[13] इति व्यूहनेन, अन्यथा शाखान्तरे[14]। सुषुमा यातमद्रिभिः[15] इति च सूक्तम्। सामयोनिषु च—अध स्विषिमाँ अभ्योजसा क्रिविम्[16] इत्यादयश्च बह्वृचानाम्। अभि त्यं देवं सवितारमोण्योः[17] इति छन्दोगानाम्। रेतो मूत्रं वि जहाति[18] इति च दृष्ट्वा रूपे व्याकरोत्[19] इति च इमे द्वे, अष्टी वा।

अथाष्टिः—त्रिकद्रुकेषु महिषो यवाशिरम्[20] इति। त्वां ह्यग्ने सदमित् सम-

---

१. 'पूर्वतः' नास्ति मै० १। २. 'तानि…भवन्ति' नास्ति मै० १।
३. '०द्वि०' मै० २। ४. '०ष्ट०' मै० २। ५. ऋ० ८।९७।१३॥
६. मा० सं० १९।७९॥ ७. को० सं० ४५८॥ ८. ऋ० ५।८७॥
९. तै० ब्रा० ३।५।११।१॥ १०. ऋ० खिल ३६।१५॥ ११. ऋ० ८।३६॥
१२. 'तथा०' मै० १, मै० २। १३. तै० ब्रा० २।५।८।८॥
१४. द्र०—का० सं० २।४॥ १५. ऋ० १।१३७॥
१६. ऋ० २।२२।२॥ को० सं० १४८८॥ १७. को० सं० ४६४॥
१८. मा० सं० १९।७६॥ १९. मा० सं० १९।७७॥ २०. ऋ० २।२२।१॥

न्यवः[1] इति च[2] अत्यष्टिर्वा। तव त्वन्नर्यं नृतोऽप इन्द्र प्रथमम्[3] इत्यादि, अतिशक्वरी वा। अभि त्यं देवम्[4] इति च, होता यक्षद् दैव्या होतारा भिषजाश्विना[5] इति च, इदं हविः प्रजननं मे अस्तु[6] इति च वाजसनेयकाः।

अथात्यष्टिः—युदृचा साम्ना यजुषा[7] इति[8]। युवं तमिन्द्रापर्वतापुरोयुधा[9] इति च[10]। अया रुचा हरिण्या पुनानः[11] इति च सूक्तम्, अग्निं होतारं मन्ये दास्वन्तम्[12] इति च पारुच्छेपं प्रायेण[13]। ध्रुवं ध्रुवेण हविषा[14] इति च। इमं समुद्रं शतधारमुत्सम्, इमामूर्णायुं वरुणस्य मायाम्, अजा ह्यग्नेरजनिष्ट[15] इति।

अथ धृतिः—देवो ऊर्जाहुतो दुघे सुदुघे पयसेन्द्रमवर्धतामिषमूर्जमन्यावाक्षीत्। सग्धि सपीतिमन्या नवेन पूर्वं दयमाने पुराणेन नवम्। अधातामूर्जमूर्जाहुती वसु वार्याणि यजमानाय शिक्षते[16] इति। सखे सखायमभ्या ववृत्स्व[17] इति च। अवमह इन्द्र दादृहि श्रुधी नः[18] इति च। येन ब्रह्म येन क्षत्रम्[19] इति च।

अथातिधृतिः—सुपर्णोऽसि गरुत्मान् इत्यादि सुवः पत[20] इत्यन्तम्, कृतिर्वा[21] शाखान्तरे। होता यक्षद् दुरो दिशः कवष्यो न व्यचस्वतीरश्विभ्यां न दुरो दिश इन्द्रो न रोदसी दुघे दुहे कामान् सरस्वती अश्विनेन्द्राय भेषजं शुक्रं न ज्योतिरिन्द्रियं पयस्सोमः परिस्रुता घृतं मधु वियन्त्वाज्यस्य होतर्यज[22] इति। स हि शर्धो न मारुतं तुविष्वणिः[23] इति व्यूहेन[24]। शकुन्तिका मे अब्रवीद् विषपुष्पं धयन्तिका[25] इति च शाखान्तरे। देवा देवेषु पराक्रमध्वम्[26] इति च।

अथ कृतिः—त्रिशुग् घर्मो विभातु म आकूत्या मनसा सह विराजा ज्योतिषा सह यज्ञेन पयसा सह ब्रह्मणा तेजसा सह क्षत्रेण यशसा सह सत्येन तपसा सह तस्य दोहमशीमहि तस्य सुम्नमशीमहि[27]।

---

१. ऋ० ४।१।१॥ २. 'च' नास्ति मै० १।
३. ऋ० २।२२।४॥ ४. मा० सं० ४।२५॥
५. मा० सं० २१।३६॥ ६. मा० सं० १९।४८॥
७. तै० ब्रा० ३।७।१४।१॥ ८. 'च' अधिकं त्रि०। ९. ऋ० १।१३२।६॥
१०. 'च' नास्ति मै०२, त्रि०। ११. ऋ० ९।१११॥ १२. ऋ० ९।१२७॥
१३. 'प्रायेण' नास्ति मै०२। १४. तै० सं० ३।२।८।६॥
१५. तै० सं० ४।२।१०।२-४॥ १६. तै० ब्रा० २।६।१०।३॥
१७. ऋ० ४।१।३॥ १८. ऋ० १।१३३।६॥ १९. तै० ब्रा० ३।७।१४।२॥
२०. तै० सं० ४।१।१०।५॥ २१. 'कृतिवा' मै०१। 'कृती वा' मै०२।
२२. तै० ब्रा० २।६।११।४॥ २३. ऋ० १।१२७।६॥ २४. 'व्यूहानि' मै०१।
२५. पै० सं० ९।१०।८॥ २६. तै० ब्रा० ३।७।५।१॥ २७. तै० ब्रा० ४।२१।१॥

अथ प्रकृतिः—भगो अनुप्रयुङ्क्तामिन्द्र एतु पुरोगवः[1], यस्यां सदोहविर्धाने यूपो यस्यां निमीयते, ब्रह्माणो यस्यामर्चन्त्यृग्भिः साम्ना यजुर्विदः, युज्यन्ते यस्यामृत्विज सोममिन्द्राय पातवे, सर्वां भूमिं दक्षिणायां सुशेवो यज्ञे दधातु सुमनस्यमाना[2] इति पञ्चावसानेति।

अथाकृतिः—तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येमेत्यादि ज्योक् च सूर्यं दृशे[3] इति।

अथ विकृतिः—इमे सोमाः सुरामाणश्छागैर्न मेषैर्ऋषभैः सुताः शष्पैर्न तोक्मभिर्लाजैर्महस्वन्तो मदा मासरेण परिष्कृताः शुक्राः पयस्वन्तोऽमृताः प्रस्थिता वो मधुश्चुतः। तानश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा जुषन्तां सौम्यं मधु पिबन्तु मदन्तु वियन्तु सोमम्[4] इति। अत्र दशाष्टाक्षराः[5] पादाः, एक एकादशाक्षरः। अग्निष्टे हस्तमग्रभीद्[6] इति च।

अथ संकृतिः—देवो अग्निः स्विष्टकृद् देवान् यक्षद् यथायथं होताराविन्द्रमश्विना वाचा वाचं सरस्वतीम् अग्निं सोमं स्विष्टकृत् स्विष्ट इन्द्र सुत्रामा सविता वरुणो भिषग् इष्टो देवो वनस्पतिः स्विष्टा देवा आज्यपा इष्टो अग्निरग्ना होता होत्रे स्विष्टकृद् यशो न दधदिन्द्रियमूर्जमपचितिं स्वधाम्[7] इति। अत्र त्रयोदश गायत्राः पादाः। उत्कृतिर्वा व्यूहेन अष्टाक्षरैः पादैः।

अपूपवान् घृतवान्। अपूपवान् श्रृतवान्। अपूपवान् क्षीरवान्। अपूपवान् दधिमान्। अपूपवान् मधुमान्[8] इत्यभिकृतयः[9]।

अथोत्कृतिः—छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभो घस्तान्नूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतः। अङ्गादङ्गादवत्तानां करत एवेन्द्राग्नी जुषेतां हविः[10] इति। एवं सुभेषजे[11]ऽपि सूक्ते सन्त्युत्कृतयः ॥७॥

---

१. 'अथावोतु प्रयुङ् द्रो यातु पुरोगमः' कोशेषु।
२. मूलं मृग्यम्! तु०—शौ० सं० १२।२।४०,३८,४४॥
३. तै० ब्रा० ४।४२।५॥
४. तै० ब्रा० २।६।११॥
५. '०ष्टा०' नास्ति मै०२।
६. 'असिस्ते' '०ग्रही०' मै०१,त्रि०। आपस्तम्बमन्त्रपाठ २।३।३ (आप० गृ० ४।१०।१२)॥
७. तै० ब्रा० २।६।१४।६॥
८. तै० आ० ६।८।१॥
९. '०कृतिः' मै०१, मै०२।
१०. तै० ब्रा० ३।६।११।१॥
११. तु०—ऋक्प्रा० १६।८८॥

उक्तं साति मध्यं प्रतिष्ठा सु च ॥८॥[1]

इमान्यत्यानि पञ्च छन्दांसि। उक्तं नामैकं छन्दः। उक्तमेव साति अतिशब्द-सहितम्, अत्युक्तमिति यावत्। तद्[2] द्वितीयं छन्दः। मध्यं[3] नाम तृतीयं छन्दः। प्रतिष्ठा नाम चतुर्थम्। प्रतिष्ठा सुशब्दसहिता सुप्रतिष्ठेति, तत् पञ्चमं छन्दः।

क्व पुनरिमानि छन्दांसि प्रतिपत्तव्यानि? न तादुत्कृतिमुपर्युपरि[4] प्रतिलोमारम्भविरोधात्। तथा हि प्रातिलोम्येन अतिछन्दसामारम्भः कृतः। परस्तात् स्थितामुत्कृतिमारभ्याधस्थस्य अधस्थस्य[5] छन्दसः उक्तत्वात्। स चारम्भः परस्तादिमानि छन्दांसि मा भूवन्निति सूचयितुम्। नापि जगतीमधोऽधः स्युः, तत्र त्रिष्टुबादीनामुक्तत्वात्। नापि गायत्रीमधोऽधः स्युः, तत्रापि संख्यानभिज्ञानात्।

अत्राह—ज्ञायत एव संख्या। तथा हि गायत्री चतुर्विंशत्यक्षरोक्ता। तस्यां चतुर्णां[6] त्यागाद् विंशत्यक्षरमुक्तं स्यात्। ततः चतुर्णां त्यागात् षोडशाक्षरमत्युक्तं[7] स्यात्। एवं द्वादशाक्षरमष्टाक्षरं चतुरक्षरमिति। नैतद् युक्तम्[8]—यतोऽस्मिन् तन्त्रे पूर्वापरपदार्थसंख्यया संख्यानियमो नाश्रीयते[9] इति षष्ठऽध्याये[10] वक्ष्यते, ततो न गायत्र्यास्संख्याश्रयणं[11] युक्तम्। अतिकृत्यादीनां[12] तु चतुरश्चतुरस्त्यजेत्कृतेः[13] इत्यस्मात् संख्याग्रहः, नोत्कृतिसंख्यामात्रात्[14]। न चैतद् वचनं त्रिष्टुबादीन्यतिलङ्घ्य गायत्र्या अधस्ताद् वृत्तिं व्यनक्ति। तस्मादज्ञातसंख्यानि छन्दांसीति। उच्यते—एवं तर्हि प्रथमातिक्रमे कारणाभावादादावेव इमानि छन्दांसि स्युः। तेनोक्तं चतुरक्षरमत्युक्तमष्टाक्षरं मध्यं[15] द्वादशाक्षरं प्रतिष्ठा षोडशाक्षरा[16] सुप्रतिष्ठा विंशत्यक्षरेति।

नन्वेवमप्युक्तमेकाक्षरमत्युक्तं द्व्यक्षरं त्र्यक्षरं मध्यं प्रतिष्ठा चतुरक्षरा सुप्रतिष्ठा पञ्चाक्षरा इत्येवं किं न स्यात्? उच्यते—पादश्चतुर्भाग[17] इति वक्ष्यमाणविशेषात्। तानीमानि छन्दांसि प्रायेण गायत्रीशब्देन व्यवह्रियन्ते। क्वचित् मा प्रमा प्रतिमा उन्मा समेत्युक्तानि[18]। क्वचिद् एवो वरिवश्शम्भूः परिभूराच्छदिति[19]। कैश्चित् कृतिः प्रकृतिः संकृतिः[20] अभिकृतिरुत्कृतिरित्युक्तानि[21]।

---

१. इदं सूत्रं हलायुधव्याख्यानं चास्य नास्ति मुद्रिते हलायुधव्याख्यासहिते।
२. 'तद्' नास्ति मै०२। ३. 'मध्यमं' मै०१, मै०२। ४. '०तिम्यः उपरि' त्रि०।
५. 'अधस्थस्य' नास्ति मै०२। ६. 'तस्याश्च०' त्रि०। ७. '०मित्यु०' कोशेषु।
८. '०तदुक्त०' मै०१। ९. '०श्रि०' मै०१।
१०. द्र०—पि० छ० ६।२८ भाष्यम्। ११. '०श्रवणं' मै०१, मै०२।
१२. 'अथिकृ०' कोशेपु। १३. पि० छ० ४।२॥ १४. '०त्रत्वात्' मै०१।
१५. 'मध्यमं' मै०१, मै०२। १६. '०रम्' त्रि०। १७. पि० छ० ४।११॥
१८. तु०—ऋक्प्रा० १७।१९॥ १९. द्र०—मा० सं० १५।४॥
२०. 'संकृतिः' नास्ति मै०२।
२१. निदानसूत्र १।५॥ मुद्रितेऽन्त्यमाकृतिरिति निर्दिश्यते, उत्कृतिरिति च पाठभेदः प्रदर्श्यते।

तत्रोक्तम्—नूनमथ[1] इत्येकपदेयम्। अथात्युक्तम्—अग्निर्ज्योतिर्ज्योतिरग्निः[2] इति द्विपदा। तथा[3]—सूर्यो ज्योतिर्ज्योतिः सूर्यः[1] इति। इन्द्रो ज्योतिर्ज्योतिरिन्द्रः[1] इति। अथ मध्यम्—अग्निर्ज्योतिस्सूर्यो ज्योतिः प्रजा ज्योतिः[4] इति त्रिपदा। अथ प्रतिष्ठा—अग्ना३इ पत्नीवा३स्सजूर्देवेन त्वष्ट्रा सोमं पिब[5] इति त्रिपदा। अथ सुप्रतिष्ठा—पुरूतमं पुरूणां स्तोतॄणां विवाचि। वाजेभिर्वाजयताम्[6] इति त्रिपदा। य ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमस्तं व ऋध्यासम्[7] इति च। अग्ने हंसि न्यत्रिणम्[8] इति च।

एषामपि मध्यगतानि[9] द्व्यक्षरप्रभृतीनि चतुरुत्तराणि विराट्स्वराणनामानि छन्दांसि भवन्ति। तथातिच्छन्दसामपि। तत्र द्व्यक्षरं छन्दो[10] बृहद्[10] इति,एकपदेयम्। अथ षडक्षरम्—जम्बुकाय स्वाहा[11] इति। एवमन्यत्रापि द्रष्टव्यानि। केचिद् द्व्यक्षरादीनां चतुरुत्तराणां[13] द्विशताक्षरान्तानां षड्विंशतेः छन्दसां हर्षिका-शर्षिका-सर्षिका-धर्ममात्रेत्यादीनि[14] नामानि[15] वर्णयन्ति, तथातिच्छन्दसामपि विधृतिः शक्वर्यष्टिः महनेत्यादीनि[16] पृथङ्नामानि[17] वदन्ति[18] ॥८॥

## अथ लौकिकम् ॥९॥

एवं तावत् जगत्यतिजगती शक्वर्यतिशक्वर्यष्टयत्यष्टी धृतिरतिधृतिः कृतिः प्रकृतिराकृतिर्विकृतिस्संकृतिरभिकृतिरुत्कृतिरिति पञ्चदश वैदिकानि छन्दांसि भवन्ति। अष्टाचत्वारिंशदक्षरादीनि[19] चतुरुत्तराणि चतुश्शतान्तानि उक्तानि, तथा—उक्तमत्युक्तं मध्यं प्रतिष्ठा सुप्रतिष्ठेति च पञ्च चतुरक्षरादीनि चतुरुत्तराणि[20] विंशत्यक्षरान्तान्युक्तानि। एषु विंशतौ छन्दस्सु लौकिकमपि रूपमस्ति। तच्च पञ्चमाध्यायादौ वक्ष्यते ॥९॥

---

१. ऋ० ८।४६।१५॥ २. को० सं० १८३१॥ ३. 'तथा' नास्ति मै०२।
४. तु०—तै० ब्रा० २।१।२।११॥ ५. तै० सं० १।४।२७।१॥
६. ऋ० ६।४५।२९॥ ७. का० सं० ३५।३॥ ८. ऋ० १०।११८।१॥
९. '०गता' कोशेषु। १०. '०च्छ०' मै०१, मै०२।
११. का० श्रौ० ४।६।१५॥ १२. मा० सं० २५।९॥ १३. 'चतुर्णां' त्रि०।
१४. द्र०—ऋक्प्रा० १७।२०॥ निदानसूत्र १।५॥
१५. 'हर्षिका-सर्षिके त्यादिना०' त्रि०।
१६. द्र०—निदानसूत्र १।५॥ '०त्यादि' मै०१, 'मोह०' मै०२, '०तेत्यादि' त्रि०।
१७. त्रि० मात्रे। १८. 'वर्णयन्ति इति' मै०२। १९. '०रादि' कोशेषु।
२०. 'चतुरक्षाणि' मै०१, मै०२।

## आ त्रैष्टुभाच्च यदार्षम् ॥१०॥

यानि चार्षाणि छन्दांसि चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि चतुश्चत्वारिंशदक्षरान्तान्या त्रैष्टुभाच्छन्दांस्युक्तानि गायत्र्युष्णिगनुष्टुब्बृहती पङ्क्तित्रिष्टुबिति तेष्वपि षट्सु लौकिकमपि रूपमस्ति। इत ऊर्ध्वमपि सर्वत्र लौकिकमित्यधिक्रियते ॥१०॥

## पादश्चतुर्भागः ॥११॥

उक्तादिषूत्कृत्यन्तेषु षड्विंशतौ छन्दस्सु वक्ष्यमाणेषु च मात्राछन्दस्सु संप्रभक्तेषु च चतुर्थो भागः पाद इति ज्ञेयः। तेनोक्तस्य एकमक्षरं पादः, गायत्रस्य षडक्षराणि, जागतस्य द्वादश, उत्कृतेः षड्विंशतिः। अत एवोक्तादीन्येकाक्षरं द्व्यक्षरं दशाक्षरमिति व्यवह्रियन्ते[१]। प्रयोजनं चास्य सूत्रस्य मात्रासमकृतसुमध्यादिषु[२]। पादमात्रस्य लक्षणे कथितेऽन्येषामपि तादृशानां पादानां त्रयाणां ग्रहणम् ॥११॥

## यथावृत्तसमाप्तिर्वा ॥१२॥

अथवा समप्रविभागसंभवे न्यूनाधिकैरपि पादैर्यथा वृत्तस्य चतुष्पाद एव समाप्तिस्संभवति, तत्र तादृश एव चतुर्थो भागः पादः। तेन वैतालीयादिषु द्वयोर्न्यूनाधिकयोः पादयोः लक्षणे कथिते तादृशौ द्वावन्यावपि पादौ[३] द्रष्टव्यौ। पदचतुरूर्ध्वं चतुर्वृद्ध्या चत्वार एव पादाः ॥१२॥

द्विविधानि खलु[४] छन्दांसि—वर्णजातयो मात्राजातयश्चेति। तत्र उक्तादय उत्कृत्यन्ता वर्णजातय उक्ताः, वक्ष्यन्ते च। मात्राजातयः पुनरार्यादय इदानीं प्रक्रियन्ते। तासु च काचिद् वेदेऽपि दृश्यते। तथा चाथर्वणिकाः श्लोकमार्याजातीयमामनन्ति—

घृतमिव पयसि निगूढं भूते भूते च वसति विज्ञानम्।
सततं मन्थयितव्यं मनसा मन्थानभूतेन ॥[५] इति।

मात्राजातयोऽपि द्वयम्—गणजातिः, निर्गणजातिश्चेति। तत्र[६] गणजातिमार्यां प्रस्तोष्यन् गणसंज्ञां कथयति—

## लः समुद्रा गणः ॥१३॥

लः लघवः, समुद्राश्चत्वारः, चतस्रो मात्रा इति यावत्। ता गणसंज्ञा भवन्ति ॥१३॥

---

१. '०यते' मै०२। २. '०तनुम०' मै०१।
३. 'द्वावन्यौ पादावपि' त्रि०। ४. 'द्वयानि' त्रि०। ५. मृग्यम्।
६. 'तत्र' नास्ति मै०१, मै०२।

## गौ[1] गन्तमध्यादिर्लश्च ॥१४॥

गौ गन्तो गमध्यो गादिर्लश्च । गौ गुरू द्वौ कदाचिद् गणोऽसौ भवति । गुर्वन्तो वा त्रिकः सगणः । गुरुमध्यो वा जगणः । गुर्वादिर्वा भगणः । चत्वारो लघवो वासौ भवति । पञ्चधापि चतुर्मात्रा[2] एव, गुरोर्द्विमात्रत्वात्, लौ स[3] इति द्वयोर्मात्रयोः स्थाने एकस्य गुरोरुक्तत्वात् ।

ननु लश्चेति पुनर्ग्रहणमनर्थकम्, लः समुद्रा गण इत्युक्तत्वात् । नानर्थकम्, तस्य मात्राविधानार्थत्वात्, अस्य च लघुप्रयोगार्थत्वात् । एतेन[4] पञ्चप्रकारेण गणेनार्या कर्तव्याः ॥१४॥

अथार्यालक्षणमुच्यते । ताश्च पञ्चतय्यः[5] गाधा गीतयश्चतस्र इति । तत्र गाधा तावत्—

## स्वरा अर्धं चार्यार्धम् ॥१५॥

गण इति वर्तते । वचनं विपरिवर्तते । स्वराः सप्त गणाः अर्धं च गणस्यार्धं च[6] श्लोकस्यार्धं स्यात्, सा आर्या नाम जातिर्भवति । गाथा[7] नामैषा आर्या शास्त्रान्तरेषूक्ता ॥१५॥

गणानां सप्तानां प्रत्येकं पूर्वोक्तैः पञ्चभिः प्रकारैः प्रयोगे प्राप्त इदमाह—

## अत्रायुङ् न ज् ॥१६॥

अत्रार्यायामयुक् अयुजो गणाः[8] प्रथमः तृतीयः पञ्चमस्सप्तमश्च जो मध्येगुरुर्न कर्तव्यः[9] । ततश्चते[10] गणाश्चतुष्प्रकाराः, शेषाश्च पञ्चप्रकाराः ॥१६॥

## षष्ठो ज्[11] ॥१७॥

षष्ठो गणो जो मध्येगुरुरेव नियमेन भवति । प्राप्तस्य वचनं नियमार्थम् ॥१७॥

## न्लौ या ॥१८॥

नगणस्त्रिलघुर्लघुश्चैक इति चतुर्लघुर्वा षष्ठो गणः ॥१८॥

## न्लौ चेत् पदं द्वितीयादि[12] ॥१९॥

षष्ठो गणो न्लौ चेत् चतुर्लघुश्चेत् पदं द्वितीयाक्षरादि[13] पृथक् प्रवर्तयेत् । षष्ठ-

---

१. 'नौ' हलायुधव्याख्यासहिते मुद्रिते ।
२. '०त्र' मै०१, मै०२ ।
३. पि० छ० १।१३॥
४. 'एकेन' मै०१, मै०२ ।
५. '०तय्यः' मै०१ ।
६. 'च' नास्ति मै०१, मै०२ ।
७. 'गाधा' कोशेषु ।
८. 'गणः' मै०१, मै०२ ।
९. '०तव्यम्' मै०१ ।
१०. 'ततस्ते' मै०१ ।
११. 'जः' कोशेषु ।
१२. 'तृतीयादि' मै०१ । 'तृतीयादिः' मै०२ ।
१३. '०यो०' मै०२ ।

गणस्य द्वितीयमक्षरं प्रथमं चैकशब्दो न स्यात्। द्वितीयमक्षरमन्यस्य शब्दस्यादिरेव स्यादित्यर्थः ॥१९॥

सप्तमः प्रथमादि ॥२०॥

सप्तमो गणो न्लौ चेत् प्रथमाक्षरादि प्रवर्तयेत्। प्रथमाक्षरं[1] शब्दस्यादिरेव स्यादित्यर्थः ॥२०॥

अन्त्ये पञ्चमः ॥२१॥

अर्धमित्यनुवर्तते[2]। बिभक्तिर्विपरिवर्तते। अन्त्येऽर्धेऽपि पञ्चमो गणो न्लौ चेत् पदं प्रथमाक्षराद्येव स्यात् ॥२१॥

षष्ठश्च ल्[3] ॥२२॥

चकारादन्त्य इत्यनुकृष्यते। अन्त्येऽर्धे षष्ठो गणो लघुरेवैकः स्यात्, न चतुर्मात्रः[4]। इत्थं गाथालक्षणमुक्तम्[5]। तत्रोदाहरणम्—

वन्दे मातरमार्यां[6] वाणीं वर्णाभिमानिनीं देवीम्।
यामेव विदुरुपास्या परासु गाथासु[7] पथ्यासु[8]॥

न्लौ वा, न्लौ चेत् पदं द्वितीयादि इत्युक्तम्। तद्यथा—

निजमुखविपुलप्रतिबिम्बं पतितमिव हि तरलतारेषु[9]।
वीक्षितुमासीनोरसि भर्तुर्जगदमलमवतु[10] रमा ॥२२॥

त्रिषु गणेषु पादः पथ्याद्ये च ॥२३॥

त्रिषु गणेषु आद्येषु पादः क्रियते आद्ये प्रथमेऽर्धे चकारादन्त्ये च। सा गाथा पथ्या नाम भवति। पूर्वमर्धस्य लक्षणविधानात् पादसद्भावासद्भावौ नोक्ताविति वचनम्। तेनात्रापि आद्य एव श्लोक उदाहरणम् ॥२३॥

विपुलाऽन्या ॥२४॥

अन्या गाथा विपुला यस्यास्त्रिषु गणेषु पादो न क्रियते। सा च पूर्वे मुखपूर्वा[11]

---

१. '०ममक्ष०' त्रि०। २. 'अर्थ०' मै०१। 'अन्त०' मै०२।
३. 'लः' मै०२। ४. '०त्राः' मै०२।
५. 'गाथा०' त्रि०। ६. '०द्यां' त्रि०। ७. '०था०' त्रि०।
८. '०द्या०' मै०१। ९. '०म्बवतीतमिव तारतरलभारेषु' मै०१, मै०२।
१०. '०दखिल०' मै०१, मै०२।
११. पि० छ० ४।२६॥ '०मुखपूर्वं' मै०१, '०मुखिपूर्वं' मै०२।

इत्यादिना वक्ष्यमाणन्यायेन मुखादिविशेषणत्रयस्यात्रापि संबद्धसद्भावात्[1] त्रिधा विपुला--मुखविपुला जघनविपुला महाविपुला चेति[2]। तत्र मुखविपुला सा यस्या न पूर्वार्धे पादव्यवस्था। यथा—निजमुखविपुलप्रतिबिम्बेत्यादिश्लोकः। यस्या नोत्तरार्धे सा जघनविपुला। यथा—

सा जयति जघनविपुला गौरी यस्या जितस्मरोऽपि हरः।
ऐक्यं गतो द्वितीयात्वमपि न सहते द्वितीयायाः॥

यस्या नोभयोरर्धयोः सा महाविपुला। यथा—

विजयन्[3] वेदांश्चतस्रः ककुभ इवाननैर्जयति धाता[4]।
यस्मात्लब्धवरस्यैव जनस्यैते महाविपुलाः॥२४॥

## चपला द्वितीयचतुर्थौ ग्मध्यौ[5] जौ॥२५॥

द्वितीयचतुर्थौ गणौ जौ मध्येगुरू[6] स्याताम्, तथा गाथा चपला नाम भवति। तौ च मध्येगुरू गणौ[7] ग्मध्यौ[8] गुर्वोर्मध्यगतौ[9] स्तः। ततश्च प्रथमो गणो गुर्वन्त एव स्यात्, तृतीयो द्विगुरुरेव, पञ्चमो गुर्वादिरेव इत्येवं गुर्वोर्मध्यगतौ जौ भवतः॥२५॥

## पूर्वे मुखपूर्वा॥२६॥

पूर्वार्धे चेदिदं[10] चपलालक्षणं तदा[11] मुखशब्दपूर्वा चपला भवति। मुखचपलेति यावत्॥२६॥

## जघनपूर्वेतरत्र॥२७॥

इतरत्र द्वितीयेऽर्धे चेदिदं चपलालक्षणं तदा[12] जघनशब्दपूर्वा चपला भवति। जघनचपलेति यावत्॥२७॥

## उभयोर्महाचपला॥२८॥

उभयोरप्यर्धयोश्चेदिदं चपलालक्षणं तदा[12] महाचपला। एतास्तिस्रोऽपि पथ्यया विपुलाभिश्च सहैव भवन्ति। ताश्च प्रत्येकं चतसृभिः संबन्धात्[13] चतुर्धा[14] चतुर्धेति[15] द्वादश चपलाः, केवलाश्चतस्र इति षोडश चपलाः। तत्र पथ्या मुखचपला[16]—

---

१. 'संबन्धात्' मै०२। 'सद्भावात्' त्रि०। २. 'केचित्' अधिकं त्रि०।
३. 'विजय' मै० १, मै०२। ४. 'इवास्यैवस्स विजयते धाता' मै० १, मै०२।
५. 'ग्मध्ये' हलायुधव्याख्यासहिते मुद्रिते। ६. 'मध्यगुरू' मै० १, मै० २।
७. 'गतौ' मै० १, मै० २। ८. 'ग्ममध्यौ' मै० १।
९. 'गुरोर्म०' मै० १, मै० २। १०. 'चेदिति इदं' मै० १।
११. 'तथा' मै० १।
१२. 'तथा' मै० १, मै० २। १३. 'संबलात्' मै०१। 'संबलात्' मै० २।
१४. '०र्धा' मै० १। १५. '०र्धेतु' मै० १, मै० २। १६. 'त्रयश्चपलाः' त्रि०।

देवाधिनाथनाथं हरिं पुराणं विनैव भगवन्तम् ।
या स्तौत्यन्यञ्जनता[1] सा कष्टा स्वैर्मुखचपला[2] ॥
देहभवव्याधिभुजां विषभुजि निष्ठां विनास्ति[3] का दयिता ।
यदमी जना[4] विना तामुपासते जघनविपुलां स्त्रीम् ॥

अथ जघनविपुला, महाचपला—

आस्तां विमुक्तिरेतास्त्रयोऽपि[5] रथ्याः कथं महाचपलाः ।
सेवां विना गिरीशस्य बालरामा इव श्वश्रूम् ॥

एवमन्या अपि द्रष्टव्याः ॥२८॥

इदानीं गीतयोऽधिक्रियन्ते—

## आद्यर्धसमा गीतिः ॥२९॥

आद्येनार्धेन समा यदि सर्वा स्यात् तदा गीतिः । आद्येनार्धेन साम्यं चार्यायाः । आद्येनार्धेन अन्त्यस्य साम्यम् । आद्येऽर्धे षष्ठो गणो जो वा न्लौ वा स्याद् इत्युक्तम् । अन्त्येऽर्धे षष्ठश्च ल[6] इति लघुमात्रष्षष्ठ उक्तः[7] । तद् यदि लघुमात्रत्वं विहाया-न्त्येऽपि षष्ठो जो वा न्लौ वा स्यात्, पञ्चमे च सर्वलघौ[8] शब्दस्य प्रथमादित्व-नियमो[9] न स्यात्, सप्तमे सर्वलघुश्च स्यात् ॥२९॥

## अन्त्येनोपगीतिः ॥३०॥

अन्त्येनार्धेन यद्यार्या सर्वसमा[10] स्यात् । आद्येऽप्यर्धे लघुमात्र एव पञ्चमे च सर्वलघौ शब्दस्य प्रथमादित्वनियमः स्यात् तदोपगीतिः ॥३०॥

## व्युत्क्रमेणोद्गीतिः ॥३१॥

व्युत्क्रमेण पूर्वार्धे षष्ठो गणो लघुमात्रः। उत्तरार्धे षष्ठो जो[11] वा न्लौ वा स्यात् तदोद्गीतिः । एता गीतयस्तिस्रोऽपि पथ्यया विपुलादिभिश्च संयुज्यन्ते । ततः षोड-शभिः[12] संबन्धात् प्रत्येकं षोडशधेत्येता अष्टाचत्वारिंशद् गाथाश्च षोडशेति चतुष्ष-ष्टिरार्याः । तत्र पथ्यागीतिः—

---

१. '०त्यं न्यञ्जनत' मै० १, मै० २ । २. 'सैव मुख०' मै० १, मै० २ ।
३. 'चिकित्सि' मै० १, मै० २ । ४. 'जनान्' त्रि० । ५. '०वि' मै० २ ।
६. पि० छ० ४ । २२॥ ७. 'अन्त्ये…उक्तः' नास्ति मै० १ ।
८. '०लघु' मै० २ । ९. '०त्व०' नास्ति त्रि० ।
१०. 'यद्यस्या' मै० १ । 'यद्यस्या समा' मै० २ ।
११. 'षष्ठे जो' मै० २ । 'षष्ठा जो' मै० १ । 'षष्ठो जौ' त्रि० ।
१२. '०षी०' मै० १ । '०शि०' मै० २ ।

गायति गीति[1] काचित् कलकण्ठी वीणया समं सलयम् ।
एकाधिपतिर्धात्र्या वीरो रामो बभूव राजेति ॥

मुखविलोपगीतिः—

अन्योपगीतिमाकर्ण्य कृतेर्ष्या गायति वयस्या[2] ।
एकाधिपतिर्धात्र्या दिवश्च कृष्णो बभूवेति ॥

जघनविपुलोद्गीतिः—

उद्गात्र्युद्गीतिं कृतवति शस्त्रे[3]ऽनुशस्ते[4] च ।
हुत्वा[5] ग्रहचमसान् सदसि भक्षयन्तोऽर्चयन्ति हरिमार्याः ॥

एवं चपलाभिरपि[6] गीतीनां योगः स्यात् । तत्र पथ्यामुखचपलादिभिः गीतिः—

अन्ये समग्रमर्थं सम्मार्ज्य[7] दानेन तोषयन्ति हरिम् ।
भगवत्स्तवमुखचपलाः भगवति[8] गीतिं[9] तन्वते पथ्याम् ॥
अन्ये कुचमुखविपुलासु गीतिकुशलासु जघनचपलासु ।
सक्ता हरावसक्तास्त्वधोमुखा यन्ति दुर्गतिं मूढाः ॥
अन्ये तु गीतिरम्याः विना महाचपलजघनविपुलाः स्त्रीः ।
भगवन्तमेव संसाररोगवैद्यं व्रजन्ति शरणमिमम् ॥

एवमन्या अपि द्रष्टव्याः ॥३१॥

## अर्धे वसुगण आर्यागीतिः ॥३२॥

गाथाया गीतीनां च अर्धे वसुगणे वसवोऽष्टौ गणा यस्मिन् सा त्वार्यागीतिर्नामार्या[10] भवति । तत्रापि गाथादीनां पूर्वार्धेऽष्टगणे मुखार्यागीतिः, उत्तरेऽर्धे जघनार्यागीतिः, उभयोर्महार्यागीतिरिति सकेतः । शास्त्रान्तरे पुनरासां पृथक्संज्ञा उक्ताः । उक्तया[11] गीत्या सहार्यागीतिः सा महार्यागीतिरेव[12] या । गाथया सह सावस्कन्धा[13], उपगीत्या सह सोपस्कन्धा । योद्गीत्या सह उत्स्कन्धा[14] । या[15] मुखार्यागीतयो जघनार्यागीतयश्च तास्संकीर्णा इति । एवं गाथादीनां भेदैश्चतुष्षष्ट्या पूर्वपरोभयार्थभेदेन[16]

१. '०तीः' मै० २ । २. 'गायतीव यस्याः' त्रि० ।
३. 'शस्ते' मै० २ । ४. 'ऽनुशस्त्रे' मै० १ ।
५. 'भुक्त्वा' त्रि० । ६. '०लादि०' मै० १ ।
७. '०मार्ज' मै० १ । '०ग्रमसम्राज्य' त्रि० । ८. '०ती' मै० २ ।
९. 'च' अधिकं मै० १ । १०. 'सार्या०' त्रि० । ११. 'सा' त्रि० ।
१२. 'एव' नास्ति त्रि० । १३. 'सोव०' त्रि० । १४. 'सोप०' त्रि० ।
१५. 'या' नास्ति मै० १, मै० २ । १६. 'पूर्वापरो०' मै० १, मै० २ ।

अन्वयात् प्रत्येकं[1] त्रिधा इत्यष्टोनशतद्वयम्, आर्यागीतिप्रकाराणां गाथादिभेदाश्चतुष्षष्टिरिति[2] द्वे शते षट्पञ्चाशच्चार्याभेदाः । एते च महाप्रभेदाः । एतेषामेकैकस्मिन्नपि प्रस्तीर्यमाणे[3] एकैका कोटिस्संपद्यते[4] । तत्र पथ्यागीतिर्महार्यागीतिः—

कुर्वन्त्यार्यागीतिं सदात्मनि सनातनं हरिं भगवन्तम् ।
पश्येद्बुद्धा तश्शान्तः क्षान्त उपरतस्समाहितो[5] भूत्वा ॥ इति ।[6]

मुखविपुला मुखचपला गाथामुखा चार्यागीतिः[7] ।
भगवन्तमेव यक्षीष्ट[8] वंशजो नोऽसतां च पथि स्मा भूत्[9] ॥

इति खल्वार्यागीतिं कुर्वन्ति मनोरथापन्नाः ।
जघनविपुला जघनचपलोपगीतिर्जघनार्यागीतिः[10] ।

एवं चार्यागीतिं कुर्वन्ति महामनोराज्ये ।
धर्मार्थकाममोक्षेषु वर्तिनोमभि सदान्यतमस्मिन्[11] ॥

सुमहाविपुला सुमहाचपलोद्गीतिर्महार्यागीतिः[12] ।
वक्ष्यामि तेन धर्मार्थकाममोक्षानिहोदाहरणे[13] ।
वाचं ममोपशृण्वन्तु[14] पुत्रस्येव[15] वल्गुमार्यागीतिम्[16] ॥

एवमन्येऽपि प्रकारा द्रष्टव्याः ॥३२॥

इत्यार्या जातिः ॥

अथ निर्गणा[17] जातयोऽत्राधिक्रियन्ते[18]—

**वैतालीयं द्विः स्वरा[19] अयुग्[20] युग् वसवोऽन्ते ल्गः[21] ॥३३॥**

ल इत्यनुवर्तते, पाद इति च । द्विस्वरा द्विष्कृतास्सप्त लघवः, चतुर्दश मात्रा इति यावत्, अयुक् पादः प्रथमस्तृतीयश्च,युक् पादो द्वितीयश्चतुर्थश्च द्विर्वसवः षोडश

---

१. 'अन्ये' त्रि० । २. 'गाथाभेदा०' मै० २ । ३. 'प्रस्तार्य०' मै १ ।
४. 'कोटे०' मै० १ । ५. '०समी०' मै० १ । ६. 'भूत्वेति' मै० १ ।
७. '०खार्या०' मै० १ । '०तिम्' त्रि० । ८. 'यवेष्ट' मै० २ ।
९. 'मा स्म भवत ॥' त्रि० ।
१०. '०ला उद्गीति०' मै० १, मै० २ । ११. '०न्यस्मिंस्तुयादिति' मै०१, मै० २ ।
१२. '०ला उद्गी०' मै० १, मै० २ । १३. '०णीहो०' मै० १, मै० २ ।
१४. '०र्निर्ममो०, मै० १ । 'निर्मलो०' मै०२ । १५. 'पुत्रकस्येव' मै० १, मै०२ ।
१६. 'वल्लुमा०' मै० २ । १७. '०णजा०' मै० १, मै० २ ।
१८. '०योऽधि०' मै १ । १९. 'द्विस्वरा' कोशेषु ।
२०. 'अयुजो' मै० १, मै० २ । 'अयुजो' त्रि० । 'अयुक्पादे' मुद्रिते ।
२१. 'लं:' मै० १ । 'ल्गाः' मुद्रिते ।

मात्राः स्युः, सा वैतालीयं नाम जातिः। आस्वेव चतुर्दशसु षोडशसु च मात्रासु किंचिन्नियममाह—अन्ते र्लगं इति। अन्ते पादाना रलगा एव नियमेन कार्याः। रगणो मध्ये लघुः। अत्र ग्लावित्यधिकारात्[1] गुरवो लघवश्च यथाक्रम प्रयोक्तव्याः। तत्रापि लौ स[2] इत्युपतिष्ठते। तत्रापि द्वयोर्मात्रयोः स्थाने एको गुरुः स्यात्।

महति[3] तपसि[4] सक्तचेतसो धन्यास्सन्त्यधनैकसंपदः[5]।
शुष्काः[6] प्रकटास्थिपंजरा वैतालीयत्तनुं वितन्वते ॥३३॥

## गौपच्छन्दसिकम्[7] ॥३४॥

अन्त इत्यनुवर्तते। एषामेव वैतालीयपादानामन्तेऽन्योऽपि गुरुरेको भवेत्, सा च औपच्छन्दसिकं नाम जातिः।

पश्यत्सु परेषु मीलिताक्षा निभृताङ्गाश्च रहस्यभीष्टचेष्टाः।
चरितं परिमोहनं परेषाम् औपच्छन्दसिकं खलाश्चरन्ति ॥३४॥

## आपातालिका[8] भो गौ[9] ॥३५॥

आस्वेव चतुर्दशसु षोडशसु च मात्रासु अन्ते भो गुरू च[10] द्वौ नियताः[11] स्युः, सा आपातालिका[12] नाम जातिः।

अयनव्रतिनोर्दिवमेको[13] यास्यति चरितैर्दुर्गतिमन्यः।
संप्रति भैक्षं चरतो द्वावापातालिकान्निष्कासितान्तात्[14]॥

आपातलिका[15] स्थालीत्यर्थः ॥३५॥

## शेषे परेण युङ् न साकम् ॥३६॥

वैतालीयादीनां पादान्ते र्लगं इत्यादिनियमः कृतः। अयुक्पादस्यादौ षण्णां मात्राणां युक्पादस्य चाष्टानां नियमो न कृत इत्यारम्भः। शेषे पादादौ[16] परेण लघुना परया मात्रया युग्लघुर्द्वितीयश्चतुर्थष्षष्ठश्च न साकं न सहैकीभवति। नैकेन गुरुणा युग्मां[17] मात्रां परया मात्रया युञ्ज्यात्। तयोः स्थाने नैको गुरुः स्यादित्यर्थः। पूर्वया तु युञ्ज्यादेव। तथा च ····धन्यास्सन्त्यधनैकसंपद[18] इत्यादिषु कृतम् ॥३६॥

---

१. द्र०—पि०छ० १।१४॥ २. द्र०—पि०छ०१।१३॥
३. 'महती' त्रि०। ४. 'तनु' त्रि०। ५. '०सन्यसनैक०' मै०१, मै०२।
६. 'शुष्टाः' मै० १। ७. '०सकम्' मुद्रिते हलायुधव्याख्यायुते।
८. '०तलि०' मुद्रिते। ९. 'भगगौ' त्रि०। 'भ् गौ ग्' मुद्रिते।
१०. 'च' नास्ति त्रि०। ११. '०तौ' त्रि०। १२. '०तलि०' मुद्रिते। 'चापा०' त्रि०।
१३. 'अयनं व्रतिनोर्दिनमेको' मै०१। 'अयं न व्रतिनोदिनमेको' मै०२।
१४. '०सितान्नरकात्' मै०१, मै०२। १५. यथाकोशम्। तु०—मुद्रितहलायुधव्याख्या।
१६. 'पादौ' मै० १। १७. 'यग्मां' मै० १। १८. द्र०—पि०छ० ४।३३॥

**षट् चामिश्रा युजि ॥३७॥**

चकारो नेत्यनुकर्षणार्थः। युजि पादे द्वितीये चतुर्थे चाद्यास्वष्टासु[1] मात्रासु षण्मात्रा अमिश्रा गुरुणा नैकीकृता न कर्तव्याः। निरन्तराः षट् लघवो न कर्तव्याः। अयुजि[2] तु क्रियन्त एव। तथा च—महति तपसीति[3] कृतम् ॥३७॥

**पञ्चमेन पूर्वस्साकं प्राच्यवृत्तिः ॥३८॥**

युजीत्यनुवर्तते। पञ्चमेन लघुना पूर्वो लघुः चतुर्थस्सह एकीभवेत्। युजि पादे चतुर्थीपञ्चम्यौ मात्रे एकेन[4] गुरुणा अधिक्रियेयाताम्, प्राच्यवृत्तिर्भवति। शेषे परेण युङ् न साकमित्यस्यायमपवादः ॥३८॥

**अयुक् तृतीयेनोदीच्यवृत्तिः ॥३९॥**

अयुजः पादस्य तृतीयेन लघुना पूर्वो द्वितीयस्सहैकीभवेद्, उदीच्यवृत्तिः ॥३९॥

**आभ्यां युगपत् प्रवर्तकम्[5] ॥४०॥**

आभ्यां लक्षणाभ्यां युगपदेकत्र कृताभ्यां प्रवर्तकं भवति। युजोः पादयो प्राग्वद् ग्रहणमिति आभ्यां प्रवर्तकमित्येतावद् वक्तव्यम्[6]। पुनर्युगपद्ग्रहणं[7] क्वचिद् युगपदपि लक्षणानां प्रवृत्तिं सूचयितुम्। तेन विपुलार्यागीतिचारुहासिन्यादिषु अयुगपदपि लक्षणप्रवृत्तिसिद्धिः। एतानि प्राच्यवृत्त्युदीच्यवृत्तिप्रवर्तकानि वैतालीयादिभिस्सहैव भवन्ति। तेन तानि नव वैतालीयाद्याश्च तिस्र इति द्वादश। तत्र वैतालीयप्राच्यवृत्तिः—

न विपन्न च लोकगर्हणा प्राच्यवृत्तिमुपजीवतां[8] नृणाम्।
अविवादमगर्हितां[9] बुधैः पितृपितामहपरम्परागताम् ॥

औपच्छन्दसिकोदीच्यवृत्तिः—

उदीच्यविषयेषु मानवानामेतेनैव निरूप्यते प्रवृत्तिः।
यदेष सदितास्युदीच्यवृत्तिर्मीनं[10] मेषवृषौ मृगं च भुङ्क्ते ॥

आपातालिकाप्रवर्तकम्—

स हास्यमुपयास्यति लोके यो रमेत वनितासु तपस्वी।
प्रवर्तकमसद्वयोग्यं चापलादिव चरन् पलिताङ्गः ॥

---

१. 'चाद्या स्वष्टसु' मै० १। 'चाद्याः सस्पष्टासु' मै० २। २. 'अ' नास्ति त्रि०। ३. द्र०—पि० छ० ४।३३॥ ४. 'मात्रेण। केन' म०२। ५. 'प्रवृत्तकम्' मुद्रिते। ६. 'युजोः वक्तव्यम्' नास्ति त्रि०। ७. 'युजेयुग०' त्रि०। ८. '०जीवि०' मै० १। ९. '०गर्हं०' मै० १, मै० २। १०. '०त्तिमन्मी' मै० १। '०त्तिमन्म०' मै०२।

अथ।पातलिका[1] प्राच्यवृत्तिः—

जाता ह्रीता बहुरागां[2] प्राच्यवृत्तिमनुचिन्त्य बुधाः स्वाम्।
बाल्ये यत् सत्स्ववलेपं ग्राम्यवागनुचितं च कुवृत्तम्॥

कैश्चिदापालिकेत्यस्यास्संज्ञोक्ता[3] ॥४०॥

## अयुक् चारुहासिनी ॥४१॥

वैतालीयादीनामयुक्पादलक्षणं श्लोकस्य चतुर्ष्वपि पादेषु स्यात् सा चारुहासिनी नाम जातिः। अयुजश्च[4] पादस्य लक्षणद्वयमुक्तम्—मात्राद्वयन्यूनत्वम्[5] उदीच्यवृत्तित्वं च। तद् यदि चत्वारोऽपि पादा न्यूनमात्रा वा सोदीच्यवृत्तिलक्षणा वोभयात्मका[6] वा स्युश्चारुहासिनी सा[7] स्यात्। सा च वैतालीयादिषु प्रत्येकं त्रिधा त्रिधेति नवधा स्यात्। वैतालीयादयश्च द्वादशेत्येकविंशतिः प्रकाराः। तत्र वैतालीयादिपादैर्न्यूनमात्रैर्यथा[8]—

दशनद्युतिचारुहासिनी स्तनविनतविलग्नमन्थरा।
विघ्नस्तपसस्सुराङ्गना तेनानुमिता फलोन्नतिः॥

एतामुत्तरान्तिकेति केचित्। अथ सोदीच्यवृत्तिलक्षणैः—

बभूव जनकोऽपि यां वधूं निरीक्षितुमनुदिशं चतुर्मुखः॥
न सापि शशिन्नारुहासिना निरीक्ष्यते मुनिभिस्तपस्विभिः॥

दक्षिणान्तिकेत्येके। अथोभयात्मकः पादैः—

तपोविपरिणाम एष यद्वनानि विपुलानि बान्धवा।
वधूश्च मदचारुहासिनी परं च कुशलं विपश्चिताम्॥

एवमौपच्छन्दसिकापातलिकयोर्द्रष्टव्यम्[9]। अथापातलिका[9] पादैर्न्यूनमात्रैः—

हा तात हे भ्रातृक[10] पुत्रा इत्थार्त्तगिरां[11] नरकेषु स्मरत।
नराणामघभाजां विचरत[12] धर्मं दुरितारिम्॥

अवपातलिकेत्येके। चारुहासिनी नाम युग्मलक्षणत्वात्, युग्मेष्वपि पादेषु निरन्तराः षड् लघवः[13] प्राप्यन्ते ॥४१॥

---

१. यथाकोशं पाठः।
२. 'ह्रीणा बहुरङ्ग' त्रि०।
३. '०दुपपालि०' त्रि०।
४. 'अयुजस्य' मै० १।
५. '०नम्' त्रि०।
६. 'चोभयात्मको' त्रि०।
७. 'वा' त्रि०।
८. '०पदै०' मै०१, मै०२।
९. '०पतलिका' कोशेषु।
१०. 'हाहेति भ्रातरिति' त्रि०।
११. 'इत्युक्तगिरां' मै० १, मै०२।
१२. 'चरत च' त्रि०।
१३. 'लघु' मै०२।

## युगपरान्तिका ॥४२॥

वैतालीयादीनां युक्पादलक्षणं सर्वेषु पादेषु स्यात् सा चापरान्तिका। युक्पाद-लक्षणं द्विविधम्—मात्राद्वयस्याधिक्यं प्राच्यवृत्तित्वं चेति। तद् यदि मात्राधिका वा सा प्राच्यवृत्तिलक्षणा वोभयात्मका वा पादाः, तथाविधापरान्तिका एषा[1] पूर्ववन्नव-धेति त्रिंशत् प्रकारा वैतालीयादीनाम्। तत्र वैतालीयपादैर्मात्राधिक्यैर्यथा—

न[2] मुनिर्लोचनगोचरो वसेद् वनितानां मदलोलचक्षुषाम्[3]।
भूत्वा ता ह्रि[4] किलापरान्तिका लघुचित्तान्यपहर्तु[5]मीशते[6]॥

एषापि दक्षिणान्तिकेत्येके। अथ सा प्राच्यवृत्तिलक्षणैः—

न परिदृष्टजीवितक्षया नोपलब्धविभवापरान्तिका।
कामुकी न दृष्टगर्हणा किं तु मोहयति केवलं जनम्॥

पूर्वान्तिकेति केचित्। अथ उभयात्मकैः—

अङ्गना न विकरोति यन्मनस्तस्यैव पञ्चमातिस्त्रिया।
अपरया पुनरलं तपस्यया सापि देहदहनेऽपरान्तिका॥

अथ पातलिका नाम पदैरुभयात्मकैः[6]—

यापरान्तिकगता परकान्ता सा न तस्य तप एव रुणद्धि।
अपि तु कीर्तिमपमार्ष्टि मतिं च प्राणमप्यवरुणद्धि कदाचित्॥

उत्पातलिकेति केचिदिति। अथ[7] मात्राधिकैः पादैः—

क्व मुनिर्वनेषु[8] स्वास्तरवासः[9] क्व वनिता[10] स्तनभारविनम्रा।
जहिहि वरारोहास्वनुषङ्गं यदि तपसे स्पृहयेत्तव चित्तम्॥

नलिनमिति केचित्। शेषाश्च द्रष्टव्याः[11]। अयुग्मेष्वपि पादेषु यथायोग षट् चामिश्रा युजाति[12] द्रष्टव्यं युग्मपादलक्षणत्वाद् अपरान्तिकानाम्[13]। अपि च—

स[14] तपस्यति यस्य योषितो नयनश्रीर्न करोति कौतुकम्।
अस्त्रीति[15] घना सुवर्चला कुसुमश्रीरिव सुप्रबोधिता॥ इति।

---

१. 'एषापि' त्रि०। २. 'च' अधिकं त्रि०। ३. '०लोचनचक्षु०' त्रि०।
४. 'भूत्वा तर्हि' मै०१, मै०२। ५. '०ल्लघुचित्तान्यवह०' त्रि०।
६. 'अङ्गना · त्मकैः' नास्ति मै०१, मै०२। ७. 'अत्र' त्रि०।
८. '०र्मवने' मै०१, मै०२। ९. 'स्वान्तर०' मै०१। १०. 'पतिता' त्रि०।
११. पूर्वोत्तरवाक्ययोर्विपर्ययो मै०१। १२. द्र०—पि० छ० ४।३७।।
१३. 'युग्मलक्षणपादं परान्तिकानाम्' त्रि०। १४. 'स' नास्ति त्रि०।
१५. यथाकोशम्।

इदमर्धसमाधिकारे सुवर्चलेति नामार्धसमवृत्तिमिति केचित्। अन्ये तु प्रबोधितेति नामेति । अस्मिस्तु शास्त्रे वैतालीयप्रकार एव, अर्धसमाधिकारे अस्याः सूत्राभावात्[1] । तथा—

अलका बहला[2] वराङ्गनानां कुहनालीनतमा[3] मुहुर्विमुक्ताः ।
विमलद्युतिमेदुराः पुमांसं हृदशस्तास्तपसो निवर्तयन्ति ॥ इति ।[4]

इदमपि तत्रैव अर्धसमं विमलद्युतिरिति नाम्न वृत्तमिति केचित् । अस्मिस्तु शास्त्रे औपच्छन्दसिकमेव ॥४२॥

इति वैतालीया जातिः ॥

## गन्ता द्विर्वसवो मात्रासमकं ल्[5] नवमः ॥४३॥

लः, पादः, शेषे परेण युजाविति[6] चानुवर्तते । गुरुवर्णान्ता द्विर्वसवो द्विष्कृता अष्टौ लघवः, षोडश मात्रा इति यावत्, ता एकपादे स्युः, मात्रासमकं नाम जातिः । अत्र नवमो लघुरेव । नवमी मात्रा लघुनैव क्रियते न गुरुणा । अत्र तुल्या एव चत्वारोऽपि पादाः ।

तिष्ठतु तावद्विषतासुकृतं सुकृतकृतं फलमचलं प्रेत्य ।
यशसोऽप्यधुना[7] मुहुरुज्ज्वलतः का वा मात्रा समकं किं वा ॥

यद्यपि गन्त इति युग्मयोर्गुर्वन्तत्वं सिद्धमेव, तथाप्ययुग्मयोर्न सिद्धमिति गन्ता इत्युक्तम्[8] । तेन चतुर्णां पादानामन्ते द्वयोर्मात्रयोः स्थाने गुरुरेकोऽवश्यं कर्तव्यः। अत्र गणैर्विधानाभावेऽपि चतसृभिर्मात्राभिरार्याणामिव गणमभ्युपगम्य विवेक उच्यते। शेषे परेण युङ् न साकमित्यधिकारात् सर्वत्र जगणो न कर्तव्यः । तत्र पादानामाद्यो गणश्चतुर्धैव भवति—द्विगो गान्तो गादिश्चतुर्लश्चेत्यद्वितीयश्चित्रा नवमश्चेति चतुर्लघुत्वे संज्ञान्तरस्य वक्ष्यमाणत्वात् । त्रिधैव भवति द्विगो गान्तो गादिश्चेति तृतीयो द्वादशश्च वानवासिकेति चतुर्लघुत्वे संज्ञान्तरस्य वक्ष्यमाणत्वात्[9] । नवमस्य लघुत्वनियमात् गान्त एव चतुर्थो गान्ता इत्युक्तत्वात् । द्विधा द्विगो गान्तश्चेति ॥४३॥

## द्वादशश्च वानवासिका ॥४४॥

एतास्वेव लघुनियमासु द्वादश्यपि मात्रा लघुरेव स्यात्, सा वानवासिका नाम[10] ।

---

१. 'अस्य सूत्रस्याभावात्' त्रि० । २. 'बहुला' मै०१, मै०२ ।
३. '०लीनमता' मै०१ । ४. 'इति' नास्ति मै०२ । ५. 'ल' कोशेषु ।
६. '०युजौदिति' मै०१ । ७. 'यसो०' मै०२ । ८. 'इत्यकम्' मै०१ ।
९. 'त्रिधैव·· माणत्वात्' नास्ति मै०१ । १०. 'वास्य' इत्यधिकम् मै०१, मै०२ ।

**वास्यत एव स्वयमपि दूराद्वातेन मही विकचसुमसाम्।**
**एवं यशसा भुवि सुकृतानां व्याप्यत एव स्वयमखिलाभः[1] ॥**

अस्याः तृतीयस्सर्वलघुरेव। केचित्तु गुरुमध्यमपीच्छन्ति। तथा विश्लोके[2] गुरुमध्यं द्वितीयं[3] चित्रायां तृतीयं[4] च। नैतदाचार्यस्य पिङ्गलनागस्य मतम्, यतश्शेषे परेणायुङ् न साकमित्यनुवर्तयति, तच्चात्रायुङ् न जीत्यत्रात्रग्रहणेन[5] सिद्धम्। तद्धि परस्तादनुवृत्तिं वारयदितरेषाम्[6] अनुवृत्तिं सूचयति। तस्मादेते प्रकारा यदि कथंचित् साधवः, अत्रासिद्धं[7] गाथा[8] इत्यत्रैव द्रष्टव्याः ॥४४॥

## विश्लोकः पञ्चमाष्टमौ ॥४५॥

ल इत्यनुवर्तते। पञ्चम्यष्टमी च मात्रा[9] लघुरेव स्यात्, सा च जातिर्विश्लोको नाम। शेषं यथाप्राप्तम्।

**जीवति न स भुवि नापि परेतो न च यस्सुखयति न स्म सुखी वा।**
**विद्याधनबलबन्ध्वादिमतां स्तवने विजहति[10] ये[11] विश्लोकम् ॥**

अस्य द्वितीयस्सर्वलघुरेव। तृतीयो द्विधा—द्विगो गादिश्चेति[12] ॥४५॥

## चित्रा नवमश्च ॥४६॥

नवमी पञ्चम्यष्टमी च मात्रा लघुरेव स्यात्, सा चित्रा नाम। अत्र[13] द्वादश्या मात्राया लघुत्वेऽपि चित्रैव स्यात्, न वानवासिका, लक्षणगौरवात्।

**इन्दुर्मुनिरिव भवतु तपस्वी[14] रुचमपि यश इव विसृजतु विशदाम्।**
**अथ च स्फुट इव शशिनि कलङ्कः चित्रा रुचिरपि विटपच्छायैः[15] ॥**

अस्या द्वितीयस्सर्वलघुरेव। तृतीयो द्विलो गन्तस्सर्वलश्चेति ॥४६॥

## परयुक्ते नोपचित्रा ॥४७॥

नवमेन परयुक्तेन नवमीदशम्योर्मात्रयोरेकेन[16] गुरुणा करणे उपचित्रा।

---

१. '०मपि लाभः' मै०१, मै०२। २. '०पि श्लो०' मै०१, मै०२।
३. '०ध्यद्वि०' मै०१, मै०२। 'द्वितीयं गुरुमध्यं' त्रि०। ४. '०यां' मै०१।
५. 'ङि०' मै०१। ६. '०यन्नित०' मै०१। ७. 'तत्रा०' मै०१।
८. 'द्र०—पि० छ० द०१॥ 'अत्रानुक्तं गाथा' हलायुधव्याख्यायुते मुद्रिते।
९. 'च' अधिकं मै०१। १०. '०ती' मै०२। ११. 'यं' मै०१, मै०२।
१२. 'चित्रा नवमश्चेति वक्ष्यते' अधिकं मै०१। १३. 'अत्र' नास्ति मै०१, मै०२।
१४. '०स्वि' मै०२, त्रि०। १५. '०पि०' मै०२। १६. '०मीमात्र०' मै०२।

असमं सुषमं[1] कुर्वन्ति खलाः सन्तमसन्तं युक्तमयुक्तम् ।
दग्धा यशसा धर्मरतानाम् उपचित्रा इव भित्तिषु वर्णाः ॥

अस्या[2] द्वितीयास्त्रिधा[3]—द्विगो गन्तो गादिश्च । तृतीयो द्विधा—द्विगो गादिश्चेति ॥४७॥

## एभिः पादाकुलकम् ॥४८॥

एभिर्मात्रासमकानां पादैः मिलितैः पादाकुलकं नाम जातिः ।

अनिशं[4] मीलितशुभदर्शनकः[5] सुकृती दोषोऽभ्युदिततमो घ्नन् ।
लोकं भुवि निजपादाकुलकं नमयति रविरिव[6] यशसोद्गच्छन् ॥

मात्रासमवानवासिकाविश्लोकचित्रापादैरिदम् ।

गुरुभिर्लघुभिश्चोदितरूपान् साहस्रोभिः कविराड्भिश्च ।
सुकृती सुकृतैः कुरुते श्लोकान् कविरिव पादाकुलकाद्यर्थम् ॥

अत्रोपचित्रायाः[7] आद्यः पादः, अन्ये मात्रासमकस्य । एवमन्यान्यपि द्रष्टव्यानि । षट् शतानि विंशतिश्च पादाकुलकानि ॥४८॥

## गीत्यार्या लः ॥४९॥

एता एव षोडश मात्रा लघव एव स्युः, न गुरुभिः क्रियेरन्, गीत्यार्या नाम स्यात् ।

सुत इह सति भुवि पितृगुणगणभृतमपि जनमभिदधाति ।
न मृत इति यशसि च समिदमलघुनि[8] ततमिति
तदचलधृतिरिह तप उपचिनु पुरु ॥

ननु तर्ह्येषा किमिति मात्राभिः लक्ष्यते, नियताक्षरसंख्यत्वाद् अक्षरैरपि लक्षयितुं शक्यते वृत्तप्रकरणपठितस्येति[9] ? सत्यम्, शिखा विपर्यस्तार्धा[10] इत्यत्र षोडशमात्रास्थाने नैकेषामेव गुरूणां ग्रहणं यथा स्यादिति । अन्यथा षोडशाक्षरस्थाने षोडशैव गुरवः स्युः ॥४९॥

## शिखा विपर्यस्तार्धा ॥५०॥

गीत्यार्याया एवार्धं विपर्यस्येत गुरुभिः करण लघुभिर्विहितायास्सा शिखा नाम ॥५०॥

---

१. 'सुषुमं' मै० १, मै० २ । २. 'तस्या' त्रि० । ३. '०स्तृतीया' मै० १ ।
४. 'अनिशम०' मै० १ । ५. '०दशन०' मै० २ । ६. 'कविरिव' मै० २ ।
७. 'तत्रो०' मै० १, मै० २ । ८. 'सम्मिद०' मै० १ ।
९. '०व्येति' मै० २ । १०. पि० छ०४।५०॥

पुनर्विशेषमाह—

लः पूर्वश्चेज्ज्योतिः ॥५१॥

विपर्यासश्च पूर्वः भागः। पूर्वमर्धं लघवः उत्तरमर्धं गुरवश्च, सा ज्योतिर्नाम शिखा।

तृणमिव दहदघमुरुफलशिखमिह दिशि दिशि ततयश उपचितमपि कुरु।
दीपज्योतिर्हस्ते कुर्याद् नेतुं लोकान् प्रेत्येहापि ।।५१॥

गश्चेत् सौम्या ॥५२॥

पूर्वो भागो गुरवः अपरो भागो लघवश्चेत् सौम्या नाम शिखा।

कीर्तिश्चैषा सेव्ये क्रूरे भाति क्रूरा सौम्ये[१] सौम्या।
सुखयति शशिरुपहृदि शयदवमतिमतिपर्यहृदि शयदवमतिदहति च॥

यद्यपि शिखादिषु सर्वत्र पादान्त एव यतिः, तथापि मात्रासमकादिभिर्मात्रा-स्वष्टासु क्रियमाणास्वपि कासुचिद् भवति[३]। तदिदं द्विर्वसव[४] इति सूचितम्, अन्यथा षोडशेति ब्रूयात् ॥५२॥

इति मात्रासमकादिजातिः॥

चूलिकार्धमेकोनत्रिंशदन्ते[५] गू ॥५३॥

अर्धमेकोनत्रिंशन्[६] मात्राः स्युः चूलिका नाम स्यात्। अन्ते द्वयोर्मात्रयोः स्थाने एको गुरुः स्यात्। अन्ते गुरुत्वस्य नित्यप्राप्तस्य पुनर्वचनं परिसंख्यार्थम्। अन्त[७] एवैकस्मिन् गुरुत्वमन्यत्र लघुत्वमेवेत्यवधारणम्। नात्र पादव्यवस्था, तत एवैषाक्षरैर्लक्षयितुं शक्यमपि न लक्षिता। अक्षरलक्ष्येषु हि वृत्तेषु पादव्यवस्था नियता। अनुक्तविशेषाणामार्याप्रकृतित्वाद् उपगीतिमार्यागीतित्वेन कार्यति केचित् पठन्ति।

सुकृतजनम्[८] अभिहितमुरुसुखमिह च भुवि दधति पृथगिव सुदृशः।
पुनरपि फलदुरु भगवति मधुपथि घटयति[९] सुमतिमतिरुचिराम्।।५३॥

सा ग् येन न समा लां ग्लः[१०] ॥५४॥

अथ यदि कश्चित् पृच्छेद् आर्यां वैतालीयादिकां वोदाहृत्यास्मिन् श्लोके कति

१. 'सौम्या' मै०१। नास्ति मै०२। २. 'यद०' मै० २। ३. 'भवन्ति' मै० १।
४. पि०छ० ४।४३॥ ५. 'चूलिकैकोनत्रिंशदेकत्रिंशदन्ते' हलायुधव्याख्यायुते मुद्रिते। हलायुधः पाठान्तरमिदं निरदिक्षत्। ६. '०कान्त०' त्रि०। ७. 'अत' मै०२, त्रि०।
८. '०कृति०' मै० १, मै० २। ९. '०यन्ति' मै० २।
१०. 'इति' अधिकं मुद्रिते।

गुरवः कति लघव इति। तत्र स्थितान् वर्णान् तेनैव संख्यापयेत्। ते यथा संख्यया आर्यादीनां विहिताभ्यो मात्राभ्यो हीयन्ते, तावन्तो गुरवः। शिष्टा लघवः। तद्यथा— वन्दे मातरमार्याम्[1] इत्यत्र चतुर्विंशद् वर्णाः सन्ति। अस्याश्चार्याया विहितास्सप्तपञ्चाशन्मात्राः। ताभ्य एते शोधिताः त्रयोविंशत्या हीनास्ततस्त्रयोविंशतिर्गुरवोऽत्र शिष्टा एकादश लघवः। तदाह—सा गु[2] सा गुर्वी संख्या, गुरूणां संख्येति यावत्। का सा[3]? येन येन परिमाणेन न समाः। के ते? ग्लः गुरवो लघवश्च। श्लोके स्थिता वर्णाः केषां न समाः? लां[4] मात्राणामार्यादीनां विहिताभिर्मात्राभिरित्यर्थः। शोध्यन्ते चैतेन गुरुलघुज्ञानेन आर्यादयः॥५४॥

इति[5] भगवतो यादवप्रकाशस्य कृतौ पिङ्गलनागच्छन्दोविचितिभाष्ये चतुर्थोऽध्यायः[6] ॥४॥

---

१. द्र०—पि० छ० ४।२२ भाष्यम्।
२. 'गु' नास्ति मै० १। ३. 'कासो' मै० २। ४. 'लामा०' कोशेषु।
५. 'श्री' अधिकं मै० १। ६. 'समाप्तः' अधिकं मै० १।

# पञ्चमोऽध्यायः

अथ 'वृत्तछन्दांस्यधिक्रियन्ते'[2]—

**वृत्तम् ॥१॥**

यानित[3] ऊर्ध्वमनुक्रमिष्यामः श्लोकान् तानि वृत्तानीति वेदितव्यानि। वृत्त-शब्दोऽयं वर्णनियमेन लक्ष्येषु श्लोकेषु प्रसिद्धः। वर्णनियमश्च द्विधा—संख्या गुरु-लघुविन्यासश्चेति। पूर्वे श्लोका मात्रानियमेन लक्षितत्वान् मात्राछन्दांसि, लक्षणं च बहूनां गुरुलघुविन्यासप्रकाराणां सामान्येन प्रवृत्तमिति जातिछन्दांसि इति चोच्यन्ते। तत्रापि यत्र वर्णविन्यासनियमः—यथा गीत्यार्याचूलिकार्यादीनां च प्रस्तारे क्रियमाणे एकैको विशेषः, तत्र वृत्तशब्दो युक्तोऽन्यत्र गौण एव। परे पुनः श्लोका वर्णविन्यासनियमेन लक्षितत्वाद् वृत्तानि। तेष्वपि यत्र लक्षणं सामान्येन प्रवृत्तं यथा—पदचतुरूर्ध्वं गायत्रीत्यादयश्च, तत्रापि जातिशब्दो युक्त एव। तस्मादत्र वर्णसंख्या नियता। तत इह **लस्समुद्रा गण**[4] इति नाश्रीयते[5] ॥१॥

**सममर्धसमं विषमं च ॥२॥**

तच्च वृत्तं सममर्धसमं विषमं चेति त्रिधा भवति[6]। यत्र श्लोके चत्वारोऽपि पादा वर्णसंख्यया गुरुलघुविन्यासेन च समानाः तत् समं वृत्तम्। यत्रार्धमर्धेन[7] प्रथम-तृतीयौ परस्परसमौ द्वितीयचतुर्थौ परस्परसमौ तदर्धसमम्। आभ्यां विपरीतं विष-मम्। द्विधा च विषमार्धसमे भवतः—महाविषमं महार्धसमं वितानविषमं वितानार्ध-समं चेति। तत्र पादानामक्षरसंख्यायाः न्यूनाधिकभावाद् महाविषममहार्धसमे भवतः, समाक्षरसंख्यानां तु पादानां गुरुलघुविन्यासवैषम्यमात्रेण वितानविषमवितानार्ध-समे ॥२॥

तत्र वितानाभिप्रायेणाह—

**समं तावत्कृत्वः कृतमर्धसमम् ॥३॥**

समवृत्तानां संख्यां तावत्कृत्वः कुर्यात्, समवृत्तसंख्ययैव गुणयेत्, सार्धसम-वृत्तानां संख्या। तद्यथा[8]—एकाक्षरस्य छन्दसो द्वे समवृत्ते इति स्थितमष्टमेऽध्याये[9]। द्वयोस्तावत्कृत्वःकरणाच्चत्वारि भवन्ति ॥३॥

---

१. 'वृत्ति०' मै०१। २. 'अथ…यन्ते' नास्ति मै०२। ३. 'यानीत' मै०१।
४. पि० छ० ४।१२॥ ५. 'तस्मादत्र…नाश्रीयते' नास्ति त्रि०।
६. 'भवति' नास्ति त्रि०। ७. 'प्रथन्तीति' अधिकं त्रि०।
८. 'एतद्यथा' त्रि०। ९. द्र०—पि० छ० ८।११ भाष्यम्।

## विषमं च ॥४॥

पुनस्तान्यपि तावत्कृत्वः कुर्यात् तावन्ति विषमवृत्तानि। चत्वर्यपि तावत्कृत्वःकृतानि चतुर्गुणितानि षोडश भवन्ति ।।४।।

## राश्यूनम्[1] ॥५॥

तावत्कृत्वःकृतं च सर्वं राशिना एकेन हीनमेव संख्या भवति, न सर्वम्। तेन द्वयोर्द्विष्करणाद् यानि चत्वारि तेभ्यो द्विकं राशिमपनयेत्। द्वे अवशिष्येते[2]। तेनैकाक्षरस्य[3] छन्दसो द्वे अर्धसमे। तथा चतुर्णां चतुष्करणाद् यानि षोडश तेभ्यश्चतुष्कं राशिमपनयेत्। द्वादशावशिष्यन्ते। तेन एकाक्षरस्य विषमाणि द्वादश। एवमन्येष्वपि छन्दस्सु समवृत्तानि तावत्कृत्वःकृत्वा एकं राशिमपनयेत्, तावन्त्यर्धसमानि। समवृत्तान्येव तावत्कृत्वःकृत्वा पुनस्तान्यपि तावत्कृत्वःकृत्वा एकं राशिमपनयेत्, तावन्ति विषमाणि। यदा पुनस्समानि तावत्कृत्वःकृत्वा राशिर्विषमान्नापनीयते, तदा समार्धसमानां मिलितानां संख्या। यदा तु तावत्कृत्वःकृत्वा तान्यपि तावत्कृत्वःकृत्वा राशिर्नापनीयते, तदा समविषमार्धसमानां[4] सर्वेषां संख्या। अत्रैव पूर्वस्यैव राशेस्त्यागः, उत्तरस्य चात्यागे विषमार्धसमानां संख्या[5], यथा पादाकुलकानाम् ।।५।।

## ग्लिति समानी ॥६॥

इदानीं समवृत्तान्युच्यन्ते। सर्वेषु छन्दस्सु युग्मसंख्येषु[6] चतुरक्षरषडक्षरप्रभृतिषु गुरुः लघुः पुनर्गुरुः पुनर्लघुः इत्यादिच्छन्दसोऽक्षरसंख्यावाप्तेरावृत्तौ समानी नाम वृत्तं भवति। आसर्गोद्वापीति[7] केचित्। इतिशब्दः प्रकारावृत्त्यर्थः। पादश्चतुर्भाग[8] इति प्रस्मर्तव्यम्[9]। तत्र गायत्री समानी—

**अर्थसंपदोऽत्र सन्ति।**
**किं समानधर्मकाममोक्षसिद्धयोऽर्थमाहुः ॥**

अत्र समानीति सामान्यायां सत्यामपि संज्ञायां क्वचिद्विशेषसंज्ञाप्यस्ति। तद्यथा—उष्णिहि समानी विभूतिः, जगत्यां विभावरी वसन्तवच्चारी वा, अतिजगत्यां भयप्लुता, अतिशक्वर्यां शुभंवा, अभिकृतौ दीपमालिकेति ।।६।।

## ल्गिति प्रमाणी ॥७॥

लघुर्गुरुः पुनर्लघुः पुनर्गुरुरिति लघूपक्रमा चेदावृत्तिः प्रमाणो नाम वृत्तं भवति। तत्र गायत्री प्रमाणी—

---

१. 'राश्यूनः' मै० २। २. '०शिष्टे' त्रि०। ३. 'एतेनै०' त्रि०।
४. 'समार्धसमानां' मै० १, मै० २। ५. 'संख्यायां' मै० १, मै० २।
६. '०संख्येति' मै० १, मै० २। ७. 'आलघुर्गोचावपी०' मै० १, मै० २।
८. पि० छ० ४।१०॥ ९. 'न स्म०' मै० १, मै० २।

गुणावली च या कुलप्रमाण्यसौ ।
श्रियैव साध्यते गुणाश्च साधवः ॥

अत्रापि कश्चित्[1] संज्ञान्तरम् । अनुष्टुभि प्रमाणी मत्तचेष्टितम्[2], अष्टयां पञ्चचामरम्, अभिकृतौ गभस्तिमालिकेति ॥७॥

## वितानमन्यत् ॥८॥

आभ्यां समानीप्रमाणीभ्याम्[3] अन्यत् सर्वं वृत्तजातं वितानसंज्ञं वेदितव्यम्, अन्यत्र महाविषम-महार्धसमेभ्यः । वितानमिति सामान्यायां सत्यामपि संज्ञायां केषांचिद् विशेषसंज्ञाप्यस्ति । तथा सहैव उक्तादिषु छन्दस्सु समवृत्तानि वितानोदाहरणानि उच्यन्ते । तत्रोक्ते[4] श्रीनामाद्यं वृत्तम्—या श्रीः सा स्तात् । अथात्युक्ते[5] स्त्री नामाद्यं वृत्तम्—स्त्रीणां मुख्या पद्मा पायात् । द्वितीयं सुखं—सदा रमा क्रियात् सुखम् । अथ मध्ये आद्यानि चत्वारि वृत्तानि क्रमात्—नारी मदोद्यं[6] मृगी प्रवरं च ।

का नारी लोकेऽस्ति श्रीतुल्या रूपाद्यैः । रमायाः प्रसादेन किं स्यान्मदोद्यम् ।
श्रीर्मृगीचञ्चला[7] वर्धते सद्गुणैः । कमलास्तवनात् किमिह प्रवरम् ।

जननीति केचित् । अथ प्रतिष्ठायामाद्यानि सप्त वृत्तानि—

कन्या व्रीडासमृद्धिस्सुमतिः[8] । श्री मल्लिका जाया[9] सुमुखी[10] च ।
नीतिं भित्त्वा प्राप्ता लक्ष्मीः । काले भोग्या[11] कन्येवान्यैः ।

अपि व्रीडां कुले यत्ते[12] विना नीत्या कृता लक्ष्मीः ।
श्रीसमृद्धिः केदारादौ[13] केदाराद्या[11] नीतिमार्गाः ।

सततं श्रीरचला स्यात् सुमतिश्चेदुपाश्रये[14] ।
श्रीमल्लिकामालां कुले[15] बद्धां गुणैः कुर्यां सदा ।

नयाश्रयो[16] जया मता नयाः क्रियाः फलाचिताः[17] ।
प्रमाण्येषा प्रसङ्गादुक्ता । किं बहुना यस्य नयाः तस्य सदा श्रीः सुमुखी ॥

---

१. यथाकोशम् । २. 'तत्र ·· तम्' नास्ति मै० १, मै० २ ।
३. 'प्रमाणीसमानीभ्याम्' मै० १ । ४. '०क्ते:' मै० २ । ५. '०क्ते:' कोशेषु ।
६. '०द्यन्' मै० २ । ७. 'श्री मृगी०' मै० १, मै० २ । 'श्रीरिव मृगी०' त्रि०
८. '०ति' मै० १ । ९. 'जया' त्रि० । १०. '०खीति' त्रि० ।
११. 'योग्या' मै०१, मै० २ । १२. 'यते' नास्ति मै० १, मै० २ ।
१३. 'केरला०' मै० १, मै० २ । १४. '०चेत्तदुपाये' मै० २ । '०दुपाये, मै० १ ।
१५. 'कूले' त्रि० । १६. 'नयाः श्रियो' मै० १ । 'नयाः श्रीः श्रियो' मै० २ ।
१७. '०र्चि०' मै० १ ।

अथ सुप्रतिष्ठायां त्रयोदशवृत्तम्—नन्दा[1]। वारेण भृगोः नन्दा[2] सह चेत्[3] सर्वेष्वपि[4] सा कार्येषु[5] शुभा। तृतीयं प्रीतिः—सौम्यवारेण स्याद्यदा[6] भद्रा सर्वकार्येषु प्रीतिरेव स्यात्। चतुर्थं घनपङ्क्तिः—जयया साधं कुजवारश्चेद् अतिसौख्यानां घनपङ्क्तिस्सा। षष्ठः—सदा तु[7] रिक्ता दिनेशसूनोः विहन्ति दोषानुक्रमेण। सप्तमम्[8]—या खलु पूर्णा स्याद्[9] गुरुवारे सा फलपङ्क्तिः। कर्म सा[10] सूते षोडशम्। नियतिरभिचरति[11] शुभं शुभनियतिस्तदभिमुखो[12] भवति। एकादशम्[13]—वागुरा एवमादिके[14] सूर्क्षणक्रिया याः[14]। कृताः[15] श्रियो वागुरेव सा॥

एवमुक्तादिषु समवृत्तानि ताम्येवैकदोदाहरणानि विशेषाभिस्संज्ञाभिस्सहोक्तानि। गायत्र्यादिषु वक्ष्यन्ते विषमार्धसमानि च। अत्राद्यद्वितीयतृतीयचतुर्थपञ्चमादिषु[16] प्रस्तारापेक्षया नष्टप्रत्ययेन बोद्धव्यम्॥८॥

अथेदानीं वितानसंज्ञानामेव केषांचिदानुष्टुभानां[17] समविषमार्धसमानां साधारणैर्लक्षणैः साधारण्यः संज्ञाः प्रक्रियन्ते। तानि च संकीर्णानीत्युच्यन्ते[18]—

## पादस्यानुष्टुब् वक्त्रम्॥९॥

पादस्येति च अनुष्टुबिति च वक्त्रमिति चाधिकारः। तेन वक्ष्यमाणं लक्षणं पादस्य छन्दश्चानुष्टुप् वक्त्रं वक्त्रसंज्ञकं[19] वेदितव्यम्॥९॥

## न प्रथमात् स्नौ॥१०॥

अस्मिन्ननुष्टुबधिकारे सर्वस्य पादस्य प्रथमाक्षरादूर्ध्वं स्नौ गणौ न कर्तव्यौ॥१०॥[20]

## वान्यत्॥११॥

सनाभ्यामन्यत् मयरतभजादिषट्कं[21] प्रथमादक्षरादूर्ध्वं विकल्पेन भवतीति। किमर्थमिदं सिद्ध एव विकल्पः, अन्यस्याप्रतिषेधाद् युगपत्प्रयोगस्यासंभवाच्च। तर्हि[22]

---

१. 'उदा' मै०१, मै०२। २. 'निन्दा' मै०१। नास्ति मै०२।
३. 'चित्' मै०२। ४. 'ष्व' नास्ति मै०२। ५. 'ष्वपि' मै० १।
६. 'स्याददा' मै०२। ७. 'सधातु' मै०१। ८. '०मम्' मै०२।
९. 'स्या' मै०१। १०. 'कर्मसु' मै०१। ११. '०रतिश्च०' मै०१।
१२. 'शुभं नि०' मं०१। '०खीम्' मै०१। १३. 'वेव०' मै०२।
१४. 'याः' नास्ति मै०१, मै०२। १५. 'याकृताः' मै०१।
१६. 'षु' नास्ति मै०१, मै०२। १७. '०भादीनां' मै०१।
१८. '०र्ण्यु०' मै०१, मै०२। १९. '०ज्ञि०' मै०१, मै०२।
२०. इतोऽग्रे 'द्वितीयचतुर्थयो रश्च' इति सूत्रं तद्व्याख्यानं च हलायुधकृतमधिकं विद्यते मुद्रिते। २१. 'यरादिगणषट्कं' त्रि०। २२. 'र्तहि' नास्ति मै०१, मै०२।

व्यवस्थयायं विकल्पः स्यात्। तथा हि[1] यस्य पादस्य चतुर्थादक्षरादूर्ध्वं यगणः कृतः, तस्य प्रथमादक्षरादूर्ध्वं षडपि गणा भवन्ति, यस्य चतुर्थान्मगणः तगणो वा तस्य प्रथमाद् रगण एव नान्ये, यस्य जगणस्तस्य प्रथमाद् रगणो नित्यं न[2] भवति। यस्य परिशिष्टाश्चत्वारः रसभनाः प्रथमात् त एव गणाः प्रयोक्तव्याः। यैश्चतुर्थमक्षरं गुरु स्यात् ते सगणस्य निषिद्धत्वाद् मयरा एव। तदेष श्लोकः—

मगणे तगणो न स्याज्जगणे सर्वदा न रः।
यगणे षडपि ज्ञेयाः शिष्टेषु मयरास्त्रयः[3]॥ इति।

प्राक् पदचतुरूर्ध्वाद्[4] अयं न्यायस्सर्वत्रोन्नेयः[5] ॥११॥

## यश्चतुर्थात्[6] ॥१२॥

वक्त्रमित्यनुवर्तते। पादस्य चतुर्थादक्षरादूर्ध्वं यगणः कर्तव्यः। तद्वृत्तं वक्त्र नाम[7]। तत्र समवृत्तं वक्त्रम्—

वक्त्रं[8] प्रधानमङ्गनानां नेत्रं प्रधानमस्यापि।
सामुद्रवीक्षणे तस्माद् मुख्यं मुखं च नेत्रं च॥

अथार्धसमम्—

त्रिगम्भीरस्त्रिविस्तीर्णः सूक्ष्मः पञ्चसु षड् दीर्घः।
चतुर्ह्रस्वो दशोत्सेधा रक्तश्चाष्टसु राजा स्यात्॥

अथ विषमवक्त्रम्—

नाभीविवरं च सत्त्वं च गम्भीराणि[9] यथायोगम्।
प्रशस्तं च विशीलत्वं वक्त्रवक्षोललाटेषु[10] ॥१२॥

## पथ्या युजो जः[10] ॥१३॥

पादस्य द्वितीयस्य चतुर्थस्य चतुर्थादक्षराज् जगणश्चेत् पथ्या[11] नाम भवति। अयुग्मयोस्तु पादयोरविशेषादष्टावपि गणाः चतुर्थाद् भवन्ति। तेषु मयरसाश्चत्वारो गुर्वन्तास्तजभनाश्चत्वारो[12] लघ्वन्ताः। नैमे युगपदयुग्मयोर्भवन्ति, तथात्वे **सर्वतः सैतवस्य**[13] इति संज्ञान्तरस्य वक्ष्यमाणत्वात्। तेन यदि प्रथमे पादे लघ्वन्ताः कृताः, तृतीये गुर्वन्ताः स्युः। अथ तृतीये लघ्वन्ताः, प्रथमे गुर्वन्ताः स्युः। गुर्वन्तास्तु युगपदे-

---

१. 'तथा हि' नास्ति मै०१। २. 'न' नास्ति त्रि०। ३. '०रादयः' त्रि०।
४. द्र०—पि० छ० ५।१६॥ ५. 'न्यय्य०' मै० १।
६. 'य चतुर्थात्' हलायुधसम्मतः पाठः। ७. 'नाम' नास्ति मै०१, मै०२।
८. 'वक्त्रं' नास्ति मै०२। ९. 'वक्त्रं०' मै०१। १०. 'ङ्' मै०१, मै०२।
११. 'अनुष्टुमं' मै०१। 'आनुष्टुमं' मै०२। १२. 'गुर्वं · रो' नास्ति मै०१।
१३. पि० छ० ५.१७॥

वोभयत्र भवन्ति । तत्र यगणेन तावदुच्यते । तत्र विषमवृत्तत्वासंभवाद् अर्धसमपथ्या, यथा—

नखान्यङ्गुलिपर्वाणि त्वग्दन्ता मूर्धजास्तथा ।
इदंपञ्चशरीराङ्गो सूक्ष्मा[1] पथ्यार्थदायिनो ॥

चतुर्थान्मगणे तु[2] कृते षष्ठाक्षरादि पृथक्पदं कर्तव्यम्[3] रगणे तु पञ्चमाक्षरादि[3]। ताभ्यां विषमपथ्या, यथा—

दीर्घाणि जिह्वानासाक्षिहनुबाहुस्तनान्तरम् ।
ह्रस्वं[4] विदुर्जङ्घाद्वयं पृष्ठलिङ्गं[5] शिरोधिश्च ॥

चतुर्थाद् रगणे[6] कृते पञ्चमाक्षरादि पृथक्पदं स्यात् । ताभ्यां विषमा यथा—

उन्नतानि घ्राणवक्त्रगुह्यमध्यं कृकाटिका ।
वक्षः कक्षौ जत्रुनखपादपृष्ठं तथोदरम् ॥

चतुर्थाद् भगणे कृतेऽपि पञ्चमाक्षरादि पृथक्पदं न स्यात् । अपि यदि प्रथमाद् रगणः कृतः, तद्यथा—

यथा[7]तोषो तान्यधरे[8] जिह्वायां नयनान्तयोः । इति ।

चतुर्थात् सगणे कृते पदं पञ्चमाक्षरादि पृथगेव स्यात् । तद्यथा—

पाण्योस्तले पादयोश्च गुह्ये चेच्छन्ति रक्तताम् । इति ।[9]

एष पदपृथक्करणन्यायो विपुलास्वपि चारयितव्यः । तदेष श्लोकः—

षष्ठाक्षरादि मगणे कृते कार्यं पदं पृथक्[10] ।
शेषे पञ्चमवर्णादि विहाय नजयान् गणान् ॥ इति ।

अयं च न्यायो धी श्री स्त्री मित्यत्र धीरिति पृथक्करणादेव सिद्धः[11] तस्यान्यत्रोपयोगाभावात् ॥१३॥

## विपरीतैकीयम् ॥१४॥

विपरीतैव पथ्येत्येकीयं मतम् । तेन पूर्वोक्तमयुक्पादलक्षणं[12] युजोरयुजोर्युक्पादलक्षणम् । संज्ञापि विपरीतेति । अर्धसमं यथा—

अङ्गं रूक्षं मांसलं वा चिपिटं[13] वा सिरालं वा ।
यत्तद्द दुष्टमतस्तनुर्विपरीतोत्तरा पथ्या ॥

अथ विषमा—

---

१. 'सूक्ष्म' त्रि । २. 'तु' नास्ति त्रि० ।
३. '०चाक्ष०' मै०१, मै०२ । ४. 'ह्रस्तौ' मै०१ । ५. '०ङ्गशि०' मै०१ ।
६. 'वा' अधिकं त्रि० । ७. 'यथा' नास्ति मै०२ । ८. संदिग्धः पाठः !
९. 'इति' नास्ति मै०२ । १०. 'पदत्वम्' कोशेषु । ११. 'सिद्धिः' मै०१ ।
१२. '०पद०' मै०१ । १३. 'चिटडं' मै०१ । 'त्रिबिडं' मै०२ ।

त्वक्स्नेहे[1] शयनं शुभं सौभाग्यं नयनस्नेहे।
अङ्गस्नेहे[2] सुभोजनं[3] सुखं भूरि स्वरस्नेहे ॥१४॥

चपलायुजो न् ॥१५॥

अयुग्मयोः पादयोः चतुर्थान्नगणस्स्यात्, चपला नाम वृत्तम्। अर्धसमं यथा—
शङ्खगतपत्रशिबिकाहयहस्तिसमारेखाः
हस्त्याश्रयं दृढतरं चपलामपि[4] बध्नन्ति ॥

अथ विषमा[5]—
मणिबन्धादुदयतेयं[6] मध्यमाङ्गुलिरेखा।
न तं जहाति पुरुषं स्त्रियं वा चपलापि श्रीः ॥

अत्र युजो युगपल्लघ्वन्ता न कार्याः। तथात्वे सर्वतस्सैतवस्य[7] इति संज्ञान्तरस्य वक्ष्यमाणत्वात् ॥१५॥

विपुला युग्लस्सप्तमः ॥१६॥

युक्पादो लघुसप्तमश्चेद् विपुला नाम स्यात्। अयुक् तु वक्त्रस्यैव। अर्धसमा यथा—
अस्वेदकौ मृदू चोष्णौ यस्योर्ध्वरेखाङ्कतलौ[8]।
पादौ नरस्य नार्या वा लक्ष्मीं विधत्तो विपुलाम् ॥

अथ विषमा—
हस्त्याः पाद्याश्च शस्त्राभरेखाः कुर्वन्ति धनिनम्।
नारी तरन्तु सैनान्यजिनपुच्छनिभामतिम् ॥१६॥

सर्वतस्सैतवस्य ॥१७॥

सर्वेषु पादेषु सप्तममक्षरं लघु भवति विपुलायाः सैतवस्याचार्यस्य मतेन।
तत्र समा—
सैतवस्य पथस्थली स्त्री च पूजितलक्षणा।
गन्तृवर्गमिमं सदा रक्षतो विपुलापदः ॥

अर्धसमा—
यल्लक्षणं पुंसि शुभं प्रायशो योषितां च तत्।
यत्राकृतिस्तत्र गुणाः सन्ति दोषा दुराकृतौ ॥

---

१. 'त्वत्स्नेहे' मै०१। 'विषम' अधिकं त्रि०। २. 'अंसस्नेहे' मै०२।
३. 'सुखोजनं' मै०१। 'अन्नस्नेहेन भोजनं' त्रि०। ४. '०फल०' मै०२।
५. '०मणि' मै०२। ६. 'बन्धादुदयतेऽयं' मै०२। ७. पि० छ० ५।१७॥
८. '०ङ्कुरवलौ' मै०१, मै०२।

अथ विषमा—

शस्तं गात्रमरोमशं[1] नाणु न[2] स्थूलमह्वलम्[3]।
पीनौ सक्तौ [खलु]स्तनौ ऊरू च सनितम्बकौ॥

लघुसप्तम इत्युक्तत्वात् सर्वेऽपि लघ्वन्ताः सर्वेष्वपि तत्र[4] चतुर्थाद् भवन्ति॥१७॥

## भ्रौ न्तौ च॥१८॥

चतुर्थादित्येव। चकारात् सर्वत्र इत्यनुकृष्यते। चतुर्थाद् भरनताश्च गणास्सर्वेषु पादेषु भवन्ति विपुलायाः। यथागणं च संज्ञा—भश्चेद् भविपुला, रश्चेद् रविपुला, नश्चेन्नविपुला, तश्चेत् तविपुला। तत्र समा—

प्रदक्षिणावर्त्तिशिखा गभीरमध्या विपुला।
सरोमराजी त्रिवली[5] वधूषु नाभिश्शुभदा॥

अर्धसमा—

उपैति मध्यकं छाया तर्जनीमध्यमयोः।
महद्ध वदत्यायुरसौ रेखान्तमालम्बि च यत्॥

अथ विषमा—

अङ्गुष्ठमूले प्रतता रेखा स्थविष्ठास्तनयान्[6]।
दिशन्त्यणिष्ठा दुहितॄ स्त्रीणां नराणां च करे॥

अथ रविपुला[7] समा—

पदयुग्मे गूढगुल्फे[8] करयुग्मे गूढसन्धौ।
घनदीर्घस्वङ्गुलिके विपुला श्रीर्देहिनां स्यात्॥

अथार्धसमा—

मूलजा वा या यवाभा[9] रेखाङ्गुष्ठे पर्वजा वा।
धान्यवान् भविष्यभोज्यां स्त्रीपुंसाम्यां सा[10] ददाति[11]॥

अथ विषमा—

रौमकैकं रूपकेषु राज्ञा द्वे द्वे पण्डितानाम्।
व्याद्यं निःस्वौ स्त्री पुमांश्च कथा[12] केकैश्चैतदाहुः॥

---

१. 'शस्तगोत्र०' मै०१, मै०२। २. 'नानुण' मै०१, मै०२। 'नाणुनं' त्रि०।
३. '०ह्लदम्' मै०१। 'ह्लयम्' मै०२, त्रि०। संदिग्धः पाठः।
४. 'भ विपुलाः' अधिकं मै०१, मै०२। ५. '०लिर्व०' मै०१।
६. 'रेखान्दवि०' मै०१। ७. 'र' नास्ति त्रि०। ८. '०ल्गे' मै०१।
९. 'यताभा' मै०१, मै०२। १०. 'स' कोशे।
११. 'धान्यवासोक्ष्यभोज्यां स्त्रीपुमांश्च तथा' मै०१, मै०२।
१२. 'अथ · कथा' नास्ति मै०१, मै०२।

अथ नविपुला समा—

रामा दुःखे न विपुला प्रमाणेन किंचिन्नता[1] ।
स्निग्धश्छविश्च वपुषा लावण्यभाक् च सुभगा[2] ॥

अथार्धसमा—

स्त्री[3] याह्री वाक्कलहकृत्[4] पृथ्वी दीर्घा कुलरिपुः ।
घनं ह्रस्वाहरति सा कुम्भाकारं च जठरम् ॥

अथ विषमा—

लम्बकुक्षी श्वशुरभृल्ललाटं देवररिपुः ।
स्त्रीणां स्फिचौ पतिरिपू[5] दीर्घा स्त्री भर्तुः[6] शुभभृत् ॥

अथ तविपुला[7] समा—

उत्सेवोनूर्ध्वोष्ठका[8] यस्याः कचा रूक्षाग्रकाः ॥
सा वर्तयेन्नित्यं कलिं[9] स्यात् तस्करी स्थूलै रदैः ॥

अथार्धसमा—

द्वे अक्षिणी श्यावप्रथे दौश्शील्यभाक् पिङ्गलेति च ।
वधूस्तथा स्यात्[10] केकरे शुष्के करे दुःखाधिकाः ॥

अथ विषमा समा[11]—

या स्त्री पाने कीसा रता भोगेष्वभेस्संसक्तदृक् ।
न तांसकायातिद्रुतमा[12]पूर्यसावुग्रा यमा[13] ॥

अस्मिन् संकीर्णप्रकरणे[14] सर्वत्र ग्लावित्यनुवर्तते । तेन पादानामाद्यन्तयोश्चाक्षरं गुरु वा लघु वा यथाकामं स्यात्, मध्ये तु यथानियमम् ॥१८॥

इति संकीर्णप्रकरणम् ॥

अथ महाविषमाणि—

प्रतिपादं चतुर्वृद्ध्या पदचतुरूर्ध्वम्[15] ॥१९॥

अनुष्टुबित्यनुवर्तते । प्रतिपादं चतुर्भिश्चतुर्भिरक्षरैर्वृद्ध्यानुष्टुप्[16] पदचतुरूर्ध्वं

---

१. 'किचनता' मै०१, मै०२ । २. 'सुखगमा' मै०१ । ३. 'स्त्रि' कोशेषु ।
४. 'वा कल०' कोशेषु । '०लहाकृत्' मै०१ । ५. '०रिपो' मै०२, त्रि० ।
६. 'भर्तृ' मै०१, मै०२ । ७. 'त' नास्ति मै०२ । 'नवि०' त्रि० ।
८. 'उत्सेधवानूर्ध्वंकायोष्टका' मै०१, मै०२ । ९. 'कलि' मै०१ ।
१०. 'स्या' मै०१, मै०२ । ११. 'विषमसमा' मै०२, त्रि० ।
१२. '०दृतमा' मै०१, मै०२ । १३. '०ग्रयमा' मै०२, त्रि० ।
१४. 'सकीर्ण' नास्ति त्रि० । १५. 'पाद०' त्रि० ।
१६. '०रैरप्यस्यानुष्टुभः' मै०१, मै०२ ।

नाम । आद्यः पादोऽष्टाक्षरः । तस्य[1] चतुर्वृद्ध्या द्वितीयो द्वादशाक्षरः । तृतीयः षोडशाक्षरः । चतुर्थो विंशत्यक्षरः । अत्र विशेषवचनाभावाद् ग्लावित्यधिकारेण गुरुलघुवर्णावुपतिष्ठेते[2] । तयोश्च यथाकामं विन्यासः । केचित्तु आर्यामिव गणरूपविन्यासमाहुः । अनुक्तविशेषाणामार्या प्रकृतिः अनुक्तसंख्यानां[3] समाक्षरता अनुक्तयतीनां पादान्ते यतिः । मध्ये च यथाशोभमिति हि छन्दसो न्यायः।,,

करपादतलं पीतं[4] मध्यनता भ्रूवलीषुविवर्तीत्वम्[5] ।
भिन्ना[6] ललाटरेखा भिन्नाभा[7]नासिका यदि वा,
यस्यासौ पदचतुरूर्ध्वमपि[8] न वाचा चलत्यगम्यां स्त्रीम्[9] ॥

अत्र पादानां व्यत्यासोऽपीष्यते । तेनेदं चतुर्विंशतिधा भवति न्यासः—अद्वविष, अषद्ववि, अषविद्व, अविद्वष, अविषद्व, अद्वषवि एवं षट् । द्वअषवि, द्वअविष, अविद्वष, अविषद्व, द्वविअष, द्वविषअ एवं षट् । षअद्ववि, षद्वअवि, षद्वविअ, षविअद्व, षअविद्व, षविद्वअ एवं षट् । विअद्वष, विषद्वअ, विद्वअष, विद्वषअ, विषअद्व, विषद्वअ एवं षट् । एवं चतुर्विंशतिधा भेदोऽस्य ॥१९॥

## गणावन्त आपीडः ॥२०॥

एषामेव पादानामन्ते गुरू द्वौ चेद् आपीडो नाम वृत्तम् ॥२०॥[10]

ननु एकत्वेन चेत् पाठः किं पादव्यवस्थया ? उच्यते—एकेन शब्देन सह मा पादौ संधायिषाताम्[11] इति'। एतेनान्यत्र पादान्ते विश्रम्य पाठ उक्तः ।

धनिनां भवन्ति सुकृतानि[12] धनविनिहितास्सदा स्थिताः[13] ।
मुक्तिरपि धनिषु किं बहुना सकलं धनेन किमु कीर्तिरुद्गता ॥

## तृतीयस्य सौरभकं रनौ भगौ ॥२१॥[14]

उद्गताया[15] एव तृतीयस्य पादस्य स्थाने रनभगाः स्युः,सौरभकं नाम वृत्तम् ।

---

१. 'तस्य' नास्ति त्रि० । २. 'वर्णा उपतिष्ठन्ते' मै०२ ।
३. 'अनुसं०' कोशेषु । ४. '०तलवीत' मै०१, मै०२ ।
५. 'मध्यतालुभ्रूवलिषु' मै०१, मै०२ । ६. 'छिन्ना' मै०१ ।
७. 'छिन्ना०' मै०१ । ८. '०र्ध्वयेपि' मै०१ । ९. 'स्तम्' मै०१, मै०२ ।
१०. अतोऽग्रे 'आदौ चेत् प्रत्यापीडः' 'प्रत्यापीडो गवादौ च' 'प्रथमस्य विपर्यासे मञ्जरीलवल्यमृतधारा.' 'उद्गतामेकतः स्जौ स्लौ न्सौ ज्गौ भ्नौ ज्लौ ग्स्जौ ग्' इति सूत्रत्रयी तद्व्याख्या च प्रणष्टा । ततोऽन्त्यस्य सूत्रस्य व्याख्याशेष आरभ्यते 'ननु' इति ।
११. 'संदधिषताम्' मै०१ । 'संधयिषताम्' मै०२ । 'संधायिषताम्' त्रि० ।
१२. 'मुता०' मै०१, मै०२ । १३. 'स्थिराः' मै०१, मै०२ ।
१४. सूत्रसंख्या यथाकोशमत्र निर्दिश्यते । १५. 'उद्गाता' मै०१ ।

पवनाः किरन्ति कुसुमानि समयविकचानि शाखिनाम्।
तन्वते च दिवि सौरभकं धनिनां यशांसि विविधार्जनास्तथा[1] ॥२१॥

ललितं नौ सौ ॥२२॥

तृतीयस्यैव पादस्य स्थाने नौ द्वौ सौ च स्युर्ललितं नाम वृत्तम्[2]।

ललितध्वनिः पीतेन[3] नवमल्लरसैर्नगैर्मिथः[4]।
सुरभिरभिसुरभिसुरभिकुसुमैर्ध्वनिभिः[5] तथैव विधिनोपजीवति ॥२२॥

उपस्थितप्रचुपितं पृथगाद्यं मसौ जभौ गौ
स्नौ ज्रौ ग्नौ स् नौ नजौ य्[6] ॥२३॥

मसजभा गुरू च द्वौ प्रथमः पादः, सनजरा गुरुश्च द्वितीयः, नौ द्वौ सश्च तृतीयः। स इति सूत्रे पृथक्करणात् पादसमाप्तिः। नास्त्रयो जयौ चतुर्थः। तदेतदुपस्थितप्रचुपितं नाम वृत्तम्। आद्यं पादं पृथक् पठन्ति, अन्यत् पादत्रयं सहैव।

कामं जातु[7] धनं व्यपैतु[8] तिष्ठतु कीर्त्तिः। धनिनां धनमपि तैस्समेति भूयः।
श्रयति हि पुनरपि तत्प्रचुपितपदमुत तदुपस्थितपूर्वम् ॥२३॥

वर्धमानं तृतीये[9] नौ स्नौ न्सौ ॥२४॥

अस्यैव तृतीये पादे नौ द्वौ सश्च पुनः नौ द्वौ सश्च[10] वर्धमानं नाम वृत्तम्। अन्यत् पूर्ववत्।

उद्भूतं क्रियया पुराङ्कुरन्धनबीजात्[11] वितनोति धनफलानि वर्धमानम्।
धनमपि घटयति लघ्वपि बहुधननिचयगृहशकुनिरिव शकुनिसङ्घमगृह्यम् ।२४।

शुद्धविराड्ऋषभं तज्राः ॥२५॥

तृतीय एव पादे तजराः स्युः, शुद्धविराडृषभं नाम वृत्तम्।

---

१. 'विविधान्नार्हस्तथा' मै०१, मै०२। २. 'भवति' अधिकं मै०१।
३. 'पितेव' मै०१, मै०२। ४. 'नवमधुरसैर्नगैर्मिथः' मै०१, मै०२।
५. 'सुशुभिरभि सुरभिः सुरभिकुसुमैर्घनि०' मै०१। ६. 'न् ज्यौ' मुद्रिते।
७. 'कान्नातु' मै०१, मै०२। ८. 'व्यवैतु' मै०१, मै०२।
९. 'तृतीये' नास्ति हलायुधव्याख्यायुते मुद्रिते। १०. 'नौ द्वौ सनौ स्नौ' त्रि०।
११. 'पुरांकूर०' मै०१, मै०२।

**इष्ट्वात्यन्तधनैर्मखैर्हरिं[1] भगवन्तं, तपसा वृषभमवाप्य वृत्तमग्रम् ।**
**तच्छुद्धविराट् पदात् परं, व्रजति पदमजमव्रतम्[2] उज्भितसङ्गः[3] ॥२५॥**

**इति महाविषमप्रकरणम् ।**

**अथार्धसमान्यारभ्यन्ते—**

**अर्धे ॥२६॥**

अधिकारोऽयमाध्यायपरिसमाप्तेः । अर्ध लक्षणमधिकृतं वेदितव्यम् ॥२६॥

तत्र विधानादर्धसमं तावत्—

**उपचित्रकं सौ स्लौ ग् भौ भगौ ग् ॥२७॥**

सास्त्रयो लघु गुरु चाद्यः पादः । भास्त्रयो गुरू च द्वौ अन्यः[4] । तदेतदाद्यमर्धम्[5] । अस्य[6] द्वितीयमप्यर्धं तादृशमेव[7] । तदेतदुपचित्रकं नाम वृत्तम् ।

**चतुरस्तमभीवनितापनीतमना[8] मृगयाव्यसनाययया ।**
**उपचित्रकमेत्य गिरेर्वनं चिन्तयति स्म[9] नृपः किल कश्चित् ॥**

एतौ त्रैष्टुभयोर्द्वयोस्समवृत्तयोः पादौ संहतावेकमर्धसमवृत्तम् । अयं च न्यायोऽन्यत्रापि[10] स्यात् । तेनान्येऽपि त्रैष्टुभानां वान्येषां[11] वा वृत्तानां समाक्षरसंख्याः पादाः द्वौ द्वावेकभूयं भूत्वा बहून्यर्धसमानि संपद्यन्ते । एषां समं तावत्कृत्वः कृतमर्धसममिति संख्योक्ता ॥२७॥

अर्धसममहार्धसमानि—

**द्रुतमध्या भौ भगौ[12] नजौ ज्यौ ॥२८॥**

भास्त्रयो गौ च[13] द्वावाद्यः[14] पादः, नः जौ द्वौ यश्चान्यः, द्रुतमध्या ।

**पानगतस्य विपक्षकदम्बं[15] प्रतिपदमन्तरुपव्रजतो मे चित्तम् ।**
**यं हरति द्रुमराजिविधुरिव पूर्णादिना[16] द्रुतमध्या नलिनं चैषाम् ॥२८॥**

संज्ञान्तरार्थं पुनरुपादानम्—

---

१. 'इष्ट्वा त्यक्त०' त्रि० । २. 'वृतम्' मै०२ । ३. '०सङ्गम्' त्रि० ।
४. 'अन्त्यः' त्रि० । ५. '०दर्धसमम्' मै०१, मै०२ । ६. 'अस्य' नास्ति त्रि० ।
७. '०र्धमीदृशमेव' त्रि० । ८. 'चतुन्त०' मै०२ ।
९. 'स्म' नास्ति मै०१, मै०२ । १०. '०य़ोत्र अन्यत्रा०' मै०१ । '०योत्रा०' मै०२ ।
११. 'वान्येषां' नास्ति मै०१, मै०२ । १२. 'ग्' अधिकं मुद्रिते ।
१३. 'च' नास्ति मै०१ । १४. 'चाद्यः' मै०२ । १५. '०वक्ष०' मै०१ ।
१६. 'पूर्ण०' मै०१ ।

**वेगवती सौ स्गौ भौ भ्गौ ग्[1] ॥२६॥**

सास्त्रयो गुरुश्चाद्यः पादः[2], भास्त्रयो गुरू च द्वावन्यः, वेगवती नाम ।

अपराध्यति कं नरश्रियः[3] संयमिनामपि दृढां ताम् ।
नियमाद्विहीनस्त्रिनर श्रीर्वेगवतीव नदी मृदुसेतुम् ॥२६॥

आपातालिका[4] च—

**भद्रविराट् तजौ रगौ मसौ जगौ ग्[5] ॥३०॥**

तजरा गुरुश्चाद्यः पाद.[2], मसजा गौ च द्वावन्यः, भद्रविराट् ।

भद्राणि समानि नो गुहाभिः नोद्यानानि खलैरुपत्यकायाम् ।
कस्तिष्ठति खर्वटेऽरिभग्नो राजा भद्रविराट् कुलाभिजातः[6] ॥३०॥

औपच्छन्दसिकं च—

**केतुमती स्जौ स्गौ भ्रौ म्गौ[7] ग् ॥३१॥**

सजसा गुरुश्चाद्यः, भरमा गौ च द्वावन्यः, केतुमती ।

धनुषां शतैर्मकरकेतोः संव्यथिता शिलीमुखानाम् ।
अटवी निरस्यति पृतनाघो केतुमतो[8] रामभद्रस्य ॥३१॥

**आख्यानकी तौ जगौ ग्[1] जतौ जगौ ग्[1] ॥३२॥**

मध्यत्वात् तौ द्वौ जो गौ च द्वावाद्यः, जतौ जो गौ च द्वावन्यः, आख्यानकी । व्यत्ययस्तवेय विपरीताख्यानकी[9] ।

एषा मयूरावलिरुच्चकेका[10] ततः कलापैर्विपिनस्य[11] लक्ष्मीः ।
आख्यानकी वाचयति प्रवक्तुं निजोऽपि[12] सर्वोऽपि हि पात्री[13] ॥३२॥

**विपरीताख्यानकी जतौ जगौ ग् तौ जगौ ग् ॥३३॥**

जतजा गौ च द्वावाद्यः, तौ जो गौ च द्वावन्यः, विपरीताख्यानकी ।

---

१. 'ग्' नास्ति मै०१ । २. 'पादः' नास्ति मै०१ ।
३. 'श्रीः' त्रि० । ४. '०तलि०' मै०२ । ५. 'ग्' नास्ति मै०१ ।
६. 'कालाभि०' मै०१ । ७. 'मो' मै०१ । 'न्गौ' मुद्रिते ।
८. 'च' अधिकं मै०१ । ९. '०वेयमाख्यानकी' मै०१, मै०२ ।
१०. '०ली०' मै०२, त्रि० । ११. 'विनास्य' मै०१, मै०२ ।
१२. 'पि' नास्ति मै०२ । १३. 'पाति' मै०२ । पक्षपाती ?

वदत्यशेषं भवदप्यविष्टं क्रमप्रसङ्गेषु विकामभावात्।
सुवासितापि प्रमदा विजातिः साख्यानकीयं विपरीतपूर्वा॥

अनयोर्वितानसंज्ञकयोः उपचित्रकन्यायेन[1] सिद्धयोरपि पुनर्वचनं संज्ञान्तरार्थम्॥३३॥

## हरिणप्लुता सौ स्लौ ग् नभौ भरौ॥३४॥

सास्त्रयो लघुर्गुरुश्चाद्यः, नौ[2] भौ द्वौ रश्चान्यः, हरिणप्लुता नाम।

इयमुन्नतिरत्र निवासिनाम् इह तत्र भवान् वरिवस्यत्वयम्[3]।
इति भूमिरसौ वदतीव मां खगरुतेन महाहरिणप्लुता॥३४॥

## अपरवक्त्रं नौ लौ ग् नंजौ ज्रौ॥३५॥

नौ रौ लघुर्गुरुश्चाद्यः पादः, नो जौ द्वौ रश्चान्योऽपरवक्त्रम्।

सततसकुलसम्पदं पदा वयमचला[4] जनतेयमाश्रिता।
न पुनरपरवक्त्रमीक्षते कुलजवधूरिव कामकाम्यया॥

वैतालीयं च॥३५॥

## पुष्पिताग्रा नौ यौ नजौ ज्रौ ग्॥३६॥

नौ द्वौ रयौ चाद्यः पादः। मध्यस्थानत्वात् पादसमाप्तिः। नौ[5] जौ द्वौ रौ[6] गुरुश्चान्यः, पुष्पिताग्रा।

कुसुमितशिरसं समाश्रयन्ती[7] धवमतिपल्लवधर्मकं[8] विभाति।
ऋतुसमयगृहीतपुष्पधर्मा व्रततिरियं वनितेव पुष्पिताग्रा॥

औपच्छन्दसिकं च। अत्र पुष्पिताग्रा इत्येतावतैव लक्षणं सिद्धयति शेषस्यापरवक्त्र-लक्षणाधिकारादेव सिद्धेः, यथा गौपच्छन्दसिकमित्यत्र,[9] तथाप्यत्राक्षरविन्यासो[10] नाधिक्रियते इति दर्शयितुं तथा कृतम्। तेन शिखायां पूर्वविन्यासो नाश्रीयते॥३६॥

## यवमती जौ जौ ज्रौ ज्रौ ग्॥३७॥

रजौ द्विकावाद्यः, मध्यस्थानत्वात् पादसमाप्तिः, जरौ द्विकौ गुरुश्चान्यो यवमती।

व्रीहिणः पुरेषु केदारा यथैव यथापिताः फलान्विताश्च।
तद्वदत्र[11] सन्तु वा पुरेषु सम्पदः तथापि तपस्यया वनेषु सन्त्यमुत्र लोकाः॥३७॥

---

१. द्र०—पि० छ० ५।२७॥ २. 'सौ' मै०१।
३. 'वरिवस्वयम्' कोशेषु। ४. '०जला' मै०१, मै०२। ५. 'नौ'।
६. 'रौ' त्रि०। ७. '०मापय०' मै०१, मै०२। ८. 'यव०' मै०२, त्रि०।
९. पि० छ० ३।३४॥ १०. 'प्यक्षर०' मै०१, मै०२।
११. 'तच्च तत्र' मै०१। 'ततश्च तत्र' मै०२।

## शिखैकोनत्रिंशदेकत्रिंशदन्ते[१] ग् ॥३८॥

एकोनत्रिंशदक्षराण्याद्यः[१] पादः, एकत्रिंशदक्षराण्यन्त्यः[२] पादः[३], शिखा नाम[४]। अन्ते द्वयोः पादयोः[५] गुरुस्स्यात्। गुरोरयं नियमो[६] नान्तस्य[७] किमनेन विभागेन ? अस्त्येव यदि समस्य स्यात्, योऽन्तस्तत्र गुरुरेवेति। तदा पूर्वत्र लघुर्वा गुरुर्वा स्यान्न नियमः। यदा तु ग्लावित्यधिकाराद् गुरौ लघौ च प्राप्ते यो गुरुः प्राप्तः सोऽन्त एवेति गुरोरयं नियमः, तदा[८] पूर्वत्र लघुरेव स्यात्। अन्तस्य नियमेऽत्र पादान्ते अर्थवत्त्वे त्वर्धान्ते वैयर्थ्यं स्यात्, गन्त इत्येव सिद्धत्वात्। तस्माद् गुरोरयं नियमः। अनुक्तविशेषाणामार्याप्रकृतित्वाद् गीतेरार्यागीतेश्चार्थेन प्रयोग इति केचित्।

इति किल नरपतिरुरुगुणगणगिरिरत्नभुवि[९] सतपसममितिमकरोद्
अशमयदपि[१०] सुतयुवतिसुपरिकरधननिचयनिहतखलमतिमखिलाम्[११]।
पुनरपि पुनरपि धनरुचिरतिशयमपि[१२] भवति पुरुषमपमनसम्
न तु जनकमधिकगुणमुपचितशुभमभिभवति[१३] न च[१४] दहति मदनदहशिखा[१५]
॥३८॥

## खञ्जा महत्ययुजीति[१६] ॥३९॥

इति भगवतो यादवप्रकाशस्य कृतौ
पिङ्गलनागछन्दो-विचितिभाष्ये
पञ्चमोऽध्यायः समाप्तः ॥[१७]

---

१. '०कान्न०' मै०२, त्रि। 'एकत्रिंशद्' नास्ति मुद्रिते। २. '०ण्यन्तः' मै०२।
३. 'पादः' नास्ति मै०२। ४. 'नाम' नास्ति त्रि०।
५. 'पादयोः' नास्ति मै०२। ६. '०रोरयमः' मै०१, मै०२।
७. '०न्त्यस्य' मै०२। ८. 'यदा' मै०१, मै०२।
९. '०ररुगणगण०' मै०१, मै०२। १०. 'दशमयदवि' मै०१। 'दशमयदवि' मै०२।
११. '०नियतखलमिति०' मै०१, मै०२। १२. '०मति०' मै०१, मै०२।
१३. 'जनमभि०' त्रि०। '०मभिवति' मै०१, मै०२।
१४. 'च' नास्ति मै०१, मै०२। १५. '०दव०' मै०२।
१६. 'षड्जा महत्ययुदि' त्रि०। 'खञ्जा विनियम्य यदि' मै०१, मै०२। सूत्रव्याख्या नास्ति कोशेषु। १७. 'इति · समाप्तः' नास्ति मै०१, मै०२।

# षष्ठोऽध्यायः

## यतिर्विच्छेदः ॥१॥

वितानमन्यद्[1] इति वृत्तानां संज्ञोक्ता लक्षणं च। प्रस्तारादि वक्ष्यते। किं पुनरिदानीमारभ्यते। सत्यामपि वितानमिति साधारण्यां[2] संज्ञायां वैशेषिकीं संज्ञां यतिं च[3] केषांचिद् वक्तुं प्रस्तारादिलक्षितानामपि पुनर्लक्षणमारभ्यते। प्रथमं तावद् यतेर्लक्षणं कथयति—यतिर्विच्छेद इति। विच्छेदः पाठवेगस्य यतिः। पठतो मध्येऽन्ते वा यो विलम्बस्सा यतिः। अत्र यत्युपनिषदो नाम भवन्ति। तद्यथा—

यतिः पाठविलम्बोऽसौ[4] त्यागोऽर्धे संधिपाठयोः।
पादान्ते पादमध्ये वा न त्यागस्संधिपाठयोः॥
द्रुतं[5] पठन् यथाशास्त्रं मध्येऽन्तेऽथ विलम्बते।

सा यतिस्स च विलम्बः अर्धान्ते संधिपाठत्यागात्मकः। तेन पूर्वार्धस्यान्ते पाठसन्तानो विच्छेत्तव्यः, नान्यत्र; संहिता च न पूर्वार्धान्तस्य शब्दस्योत्तरार्धेनाद्येन कार्या। तद्यथा—

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा।
आचार्यमुपसंगम्य राजा वचनमब्रवीत्॥

इत्यत्र तदाचार्यमनयोस्संहिता[6] न कार्या। तथा—

चण्डप्रचण्डदोर्दण्डमण्डलाखण्डलार्चिता।
अव्याद् वश्चण्डमुण्डादिमुण्डमण्डलमण्डिता॥

इत्यत्रार्चिताव्यादित्यनयोस्संहिता न कार्या। अन्यत्र कार्यैव—

अर्धे पादेऽस्य भागे च ह्यन्ते च स्याद् यतिस्त्रिषु।
त्रिधा यतिश्च शब्दान्तसमासपदमध्यजा[7]॥

अर्धे अर्धान्ते पादे पादान्ते पादभागे च क्वचित् क्वचित् त्रिकचतुष्कादौ यतिः। सा च त्रिधा—शब्दान्तजा, समासमध्यजा, पादमध्यजा चेति।

---

१. पि० छ० ५।८॥ २. 'सामान्यायां' मै०१, मै०२। 'साधारण्यां' त्रि०।
३. 'वैशेषिकी संज्ञा यतिश्च' कोशेषु।
४. 'पाद०' मै०१। ५. 'ततः' मै०१, मै०२। ६. 'दाचा०' त्रि०।
७. 'शब्दन्त' मै०१, मै०२।

आद्ये स्थाने यतिश्चाद्या मध्यमे त्वाद्यमध्यमे ।
अन्त्ये तिस्रो यणा संधिः पादयोः स्यात् परादिवत् ।।

अर्धान्ते शब्दान्तजैव यतिः, नार्धे द्वे एकेन शब्देन समासेन वा सन्दध्यात् । पादान्ते शब्दान्तजा, समासमध्यजा च स्यात्, नान्या । नैकेन शब्देन द्वौ पादौ संदध्यात् । समासमध्यजा[1] यथा—

नमो लोकतमोजालच्छिदे परमतेजसे । इति ।

पादभागे तिस्रोऽपि यतयः पादान्त्यस्य शब्दस्य उत्तरपदाद्येन यणादेशसंधिः[2] स्यात् । स च परस्य पादस्यादिः स्यात्, न पूर्वस्यान्तः । तद्यथा—

तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही[3] ।

तथा—

स पल्वलोत्तीर्णवराहयूथा-
न्यावासवृक्षोन्मुखबर्हिणानि । इति ।

पादमध्येऽपि परादिरेव । यथा—

गाढोत्कण्ठा[4] गुरुषु दिवसेष्वेषु गच्छत्सु बाला । इति ।

यणादेशसदृशोऽपि क्वचिद् यतिः, परादित्वं च यथा—

मातङ्गस्य स्रुतमदजलस्येव[5] भृङ्गाः कपोलः[6] । इति ।

पूर्वान्तस्त्वन्यसंधिः[7] स्याद् भाग एकाक्षरो न चेत् । अन्यस्तु संधिः पादान्तस्य[8] शब्दस्योक्तपादाभावात्[9] पूर्वस्य पादस्यान्त्यः स्यात्, नोत्तरस्यादिः, संधिना च संविभक्तस्य शब्दस्य परो भाग एकाक्षरो न स्यात् । यथा—

विनायकाय मातङ्गाननाय महते नमः ।
ब्रह्मादिकीटपर्यन्तं यत्प्रसादात्मिकाः क्रियाः ।। इति ।

भागौ पूर्वापरौ[10] नैकवर्णौ चेत् पादमध्यजा[11] यतिः । विभक्तस्य[12] पूर्वापरभागौ[13] नैकवर्णौ चेत् पादमध्येऽपि यतिः स्यात् । यथा—

---

१. 'मध्यमजा' मै०१ । २. 'सिद्धिः' मै०१, मै०२ ।
३. '०हीति' मै०१, मै०२ । ४. '०कण्ठे' मै०१ ।
५. '०स्यैव' मै०१, मै०२ । ६. '०लम्' मै०२ । ७. '०न्यः सं०' मै०१ ।
८. 'स्य' नास्ति मै०२ । ९. '०स्योत्तरपादाद्यो न भवति' मै०१, मै०२ ।
१०. 'पूर्वपरौ' त्रि० । ११. 'पद०' कोशेषु ।
१२. 'यतिः विभक्तस्य' नास्ति त्रि० । १३. '०रौ भा०' मै०२, त्रि० ।

**पर्याप्तं तत्र पुत्रीयति महति जन** इति ।

उपसर्गेऽपि कुर्वीत पादार्धान्तियोर्यतिम्[१] ।

**यथाशोभं यतिः कार्या सर्वत्र स्वयमेव[२] तु ।**

उपसर्गेऽपि पादमध्येऽपि तु क्रियत एव यतिः । यथा—

**एवं तावद्द विरोधादियमपि न[३] परिच्छिद्यते देहमात्रम्** । इति ।

सर्वत्र यथाशोभं यतिः कर्तव्या । क्वचित् क्वचिद् उपदेशश्शोभाप्रदर्शनार्थः । क्वचित् संज्ञान्तरार्थः । यथा—**मालर्तु नवकौ द्वे चेद्[४]** इति । क्वचिदस्फुटत्वात् । यथा—**ऋषभगजविलसितम्[५]** इति । इति यत्युपनिषदः ॥१॥

अथ गायत्र्यादीनां समवृत्तान्युच्यन्ते । उक्तादीनां त्वप्रसिद्धत्वात् प्रस्तारादिभिश्च सिद्धत्वाद् नोक्तानि । तत्र गायत्र्याम्—

**तनुमध्या त्यौ ॥२॥**

पादस्येत्यनुवर्तते । त्यौ गणौ यदि क्रमात् पादस्यावयवौ, तद् वृत्तं तनुमध्या नाम । अन्ये तादृशास्त्रयः पादाः द्रष्टव्याः ।

**रामां तनुमध्या गच्छेदनुवृत्ताम्[६] ।**
**यो जीवितुमिच्छेत् भर्ता शतमायुः ॥**

अपि च शास्त्रान्तरेष्वन्यान्यपि बहूनि वृत्तान्युक्तानि । तान्यप्रसिद्धत्वात् प्रस्तारादिभिश्च सिद्धत्वाद् आचार्येण नोक्तानि । तथापि तेषु कानिचिल्लक्षणेनोदाहरणेन च स्थाने स्थाने प्रदर्श्यन्ते । तत्र सौ द्वौ रमणी नाम वृत्तम्—

**अनुरागवती रमणीहक्कृतास्मितपूर्ववचाविकृतावयवैः ।**
**यौ द्वौ विचित्रं विचित्रं च दृष्ट्वाकरोदोक्षितं या कटाक्षं क्षिपन्तो**
**वधूस्सानुरक्ता ॥**

रमौ मालिनी—

**तिष्ठते पत्ये या मालिनी[७] सद्वस्त्रा गायति छन्ना वा साङ्गनाभिस्नेहा[८]** ॥२॥

अथोष्णिहि—

**कुमारललिता ज्सौ ग[९] ॥३॥**

ज्सौ गुरुश्च कुमारललिता । सूत्रमेवोदाहरणम् । केचिद् द्वयोः पञ्चसु यतिमाहुः । तद्यथा—

---

१. 'पादं चार्धान्तियोर्यतिः' मै०१, मै०२ । २. 'ह्यय०' मै०१, मै०२ ।
३. 'तु' मै०१, मै०२ । ४. पि० छ० ७।११॥
५. पि० छ० ७।१४॥ ६. '०नरक्ताम्' त्रि० । ७. 'मलिनी' मै०१ ।
८. '०ना सस्नेहा' त्रि० । ९. 'जसगाः' त्रि० । 'जसौ ग्' मुद्रिते ।

भुजावपि विभूषाः[१] कुचावपि च नाभिम्[२]।
पतिं प्रति सरागा स्त्रियः प्रकटयन्ति ॥

अपि च मसौ गश्च मदलेखा—

भ्रूक्षेपेण ललाटे सोत्कण्ठा[३] मदलेखा।
यां दृष्ट्वा पुरुषं स्त्री धत्ते साप्यनुरक्ता ॥

रसौ गश्चोद्यता—

अंशुकं विनयन्ती[४] विक्रियाः[५] सहसैति[६]।
उद्गमापगमादीरुद्यताप्यनुरक्ता[७] ॥

रयौ गश्शान्तिः—

या विमुच्यते केशान् स्वान् सन्निधौ निबध्नाति।
याति[८] शान्तिमुद्वीक्ष्य क्रोधनेऽपि सा स्निग्धा ॥

तभौ[९] गश्च कमला—

या चरमस्वपरा जागरणी प्रथमम्।
सा च धवे सरसा[१०]स्त्री कमलेव हरौ ॥

यदि भगणास्त्रयो गुरुश्च पङ्क्तौ चित्रपदा नाम वृत्तं स्यात्, यदि भाश्चत्वारोऽतिजगत्यामङ्गरुचिः, यदि पञ्च अष्टयां पद्ममुखी सुरसा[११] वसथो[१२] वा, यदि षट् अतिधृत्यां कुसुमम्, यदि सप्त आकृत्यां मदिरा तुला वा, यद्यष्टौ गुरुश्चातिकृतौ[१३] वितानमेवेति ॥३॥

अथानुष्टुभि—

माणवक्राक्रीडितकं[१४] भ्तौ ल्गौ ॥४॥

भतलगा माणवकाक्रीडितकं[१४] नाम वृत्तम्। यथा—

मणवकाक्रीडितकं ग्राम्यवचो गर्ह्यतमम्।
शाठ्यमिति स्त्री कुरुते पुंसि न या रागवती ॥४॥

---

१. 'भुजालिभूषाः' मै०१, मै०२।
२. '०भिः' मै०१, मै०२। ३. '०कम्पा' त्रि०। ४. '०न्ति' त्रि०।
५. 'क्रिया' मै०१, मै०२। ६. '०सेति' त्रि०। ७. '०दि०' मै०१।
८. 'यान्ति' मै०१। ९. 'भौ' मै०२। १०. 'धवेधरसा' मै०१, मै०२।
११. 'सरसा' मै०१, मै०२। १२. 'वसधो' मै०१।
१३. '०चाकृतो' मै०१, मै०२। १४. यथामुद्रितम्। 'माणवकक्रीडितं' कोशेषु।

## चित्रपदा भौ गौ ॥४॥

भौ द्वौ गौ च चित्रपदा।

एकरताप्यनुरक्ता[1] व्युज्झति[2] तत्सकलं स्त्री।
अन्यजने यदि सक्ता चित्रपदा विकृतिर्हि॥

तथा यदि षड् भगणा[3] गुरू च द्वौ कृतौ सरोरुहनेत्रा, यदि सप्त विकृतौ मयूरगतिः, यद्यष्टावुत्कृतौ प्रविराजितम् ॥५॥

## विद्युन्माला मौ गौ ॥६॥

मौ द्वौ गौ च विद्युन्माला। यथा—

शय्याद्वेषो गात्रस्फोटो जृम्भा चोच्चैः क्रोधश्चाग्रे[4]।
यस्यास्सान्तर्निस्स्नेहा स्त्री दृश्या विद्युन्मालेवाक्षणा॥

उपचित्रा च—इदमनुष्टुभि सर्वगुरुकं[5] वृत्तम्। यद् गायत्र्यां तत् सावित्री। यदुष्णिहि तद् गान्धर्वी। यदुत्कृतौ[6] तदैरावती माला। अनुष्टुभानामुक्तानां[7] चतुर्षु चतुर्षु यतिः। अपि च मनौ गौ च द्वौ हंसरुतम्[8]—

स्पृष्टा कम्पयति गात्रं दृष्टा वा श्वसिति चाग्रे।
निस्स्नेहा वदति रूक्षा प्रोक्ता हंसरुतवाचा[9]॥

यौ द्वौ लगौ मनोज्ञम्—

विरक्ताभिमानोद्धता न यान्तं रुणद्धि प्रियम्।
मनोज्ञं च धत्ते मुखं मुदा प्रोषिते[10] भर्तरि॥

नौ द्वौ लौ[11] चालिः—

अपमधुसुमनसमलिरिव[12] पतिरपि।
विरसयुवतिमयमफलमभिसरति[13]॥

---

१. '०रक्तौ' मै०१, मै०२। २. 'प्यु०' मै०१। ३. 'षड्गणा' मै०१, मै०२।
४. 'कोपश्चाग्रे' त्रि०। ५. '०भिस्सर्व०' मै०१, मै०२।
६. 'यदनिवृत्तौ' मै०१, मै०२। ७. 'उक्तानां' नास्ति मै०१, मै०२।
८. 'हंसरुतं म्नौ गौ' इति पिङ्गलसूत्रत्वेनोरीकृत्य व्याचख्यौ हलायुधः।
९. '०तावाचा' त्रि०। '०तवचा' मै०१, मै०२। १०. 'प्रेक्षते' मै०१।
११. 'तौ' मै०२। १२. '०रीव' मै०१।
१३. '०पल०' मै०२। '०रसति' त्रि०।

इदमेव द्विगुणमष्ट्यां लघुपदं नाम वृत्तं भवति ॥६॥

अथ बृहत्याम्--

भुजगशिशुसृता[1] नौ म्[2] ॥७॥

युवतिरसुहरा स्पर्शे मुखचपलतया क्रूरा ।
कुटिलगतिर्दुराक्रान्तिर्भुजगशिशुसृता द्वेष्ट्री[3] ॥७॥

हलमुखी नौ स् ॥८॥

रनसा हलमुखी ।[4]

योषितं त्यजतीह रसात् धर्घध्वनिमभिनरात् ।
घस्मरामतिकृशतनु[5] सूकरोमिव हलमुखीम् ॥

त्रिभिष्षड्भिश्च यतिः । अपि च—भो मौ च द्वावक्षि[6] ।

अक्षि विरूक्षं वागश्लक्ष्णा सर्प इवाङ्के स्पर्शोऽनिष्टः ।
वञ्चयितृत्वे[7] न्यस्ता बुद्धिर्मुह्यसि[8] कस्मान्निस्स्नेहायाम् ॥

पञ्चसु चतुर्षु च यतिः । उपचित्रा च । सजसा अङ्गिता—

ललितं वचो बहुधनं कुलमङ्गिता च वपुषः ।
सुदतीं वृथैव विरसां ललनामवाप्य विमुखोम् ॥

भौ द्वौ रश्चोत्सुकम्—

योषिति यत्र नरोऽनुको न्यस्यति जीवितमप्यसौ ।
उत्सुकमेव विहाय तं याति परं विरसा निजैः[9] ॥८॥

अथ पङ्क्तौ—

शुद्धविराट् म्सौ ज्गौ ॥९॥

मसजगाश्शुद्धविराट्—

यज्जेता कुसुमायुधोऽप्ययं कामः शुद्धविराट्कुलान्यपि ।
तत्स्नेहेन दृढां वराङ्गनां त्वां[10] कृत्वा न विरक्तकः स्त्रियम् ॥

---

१. '०भृता' पाठान्तरं मुद्रिते ।
२. 'नौ मौ' मै०१ । 'नौ मः' त्रि० । ३. 'द्वेष्टि' मै०१, मै०२ ।
४. 'रन · खी' नास्ति मै०१, मै०२ । ५. '०रानतिकृशतनुः' मै०१, मै०२ ।
६. '०क्षी' मै०१, मै०२ । ७. 'वञ्चितुमेव' मै०१, मै०२ ।
८. '०ति' मै०१, मै०२ । ९. 'निजे' त्रि० । १०. 'तां' त्रि० ।

अपरान्तिका च ॥९॥

रुक्मवती भ्मौ स्गौ[1] भूतेन्द्रियाणि[2] ॥१०॥

भमसगा रुक्मवती। पञ्च वर्णान् पठित्वा यतिस्स्मृता।

यत्सुभत्वं गर्वनिरासादन्यगुणोक्त्या वाञ्छति लोकः[3]।
तस्य विपाके रुक्मवती शोः[4] प्रेमवती स्त्री न तु रूक्षा॥

उपचित्रा च। पादान्ते प्राप्ता यतिः पुनरुपदिष्टत्वात् क्वचित् पादान्तेऽपि न यतिरिति सूचयितुम्। तेन यदाहुः गायत्रस्याधस्तात्[5] न पादान्ते नार्धान्ते यतिरिति तत् सिद्धम्॥१०॥

पणवो म्नौ य्गौ ॥११॥

मनयगाः पणवः।

यत्कामो जयपणवं वान्यं लोकेषु त्रिषु तनुते तच्च।
स्त्रीणां भ्रूयुगधनुषो[6] वीर्यं स्निग्धानां किल न विरूक्षाणाम्॥

पञ्चसु पञ्चसु यतिः, मात्रासमकं च ॥११॥

मयूरसारिणी[7] र्जौ र्गौ ॥१२॥

रजरगाः मयूरसारिणी।

यन्मयूरसारिणीमुखा स्त्री[7] वर्जयन्ति लक्षणैरभव्यैः।
तच्च ता विरक्तचेतसश्चेन्नानुरक्तचेतसां निषेधः॥१२॥

मत्ता म्भौ स्गौ समुद्ररसाः[8] ॥१३॥

मभसगा मत्ता। चतुरष्षट् च पठित्वा यतिस्थानम्। यथा[9]—

मर्त्यं[10] युवतिषु मत्ता वृत्तं वित्तं धिक्त[11] जहति तनुं च।
तद्वत्प्रेम प्रियमधुपानां[12] निस्सङ्गाभिर्जयति निस्सङ्गम्[13]॥

वानवासिकं[14] च ॥१३॥

---

१. सूत्रविपर्यासोऽत्र। मुद्रिते तु 'पणवो म्नौ य्गौ' 'रुक्मवती भ्मौ स्गौ' इति न्यासः।
२. 'भूतेन्द्रियाणि' नास्ति मुद्रिते। ३. 'लोकम्' मै०१, मै०२।
४. 'स्त्री' मै०१, मै०२। ५. '०त्र्य०' मै०१। ६. '०षे' मै०१, मै०२।
७. 'स्त्रीं मयूरसारिणीं मुखा' मै०१, मै०२। ८. 'समुद्ररसाः' नास्ति मुद्रिते।
९. 'यद्वा' कोशेषु। १०. 'मत्यं' मै०२। ११. 'धिक्त' नास्ति मै०२, त्रि०।
१२. '०मधुवाता' त्रि०। १३. 'ससङ्गम्' मै०१। 'न सङ्गन्' मै० २।
१४. '०का' त्रि०।

**उपस्थिता तो जौ ग्[1] ॥१४॥**

[2]तो जौ द्वौ गुरुश्च[3] उपस्थिता ।

यद्वा दुरवापतपश्चयं[4] हित्वा मुनयोऽप्यभवंश्चलाः[5] ।
स्निग्धा[6] उपजातमुपस्थितं दृष्ट्वा तपसोऽपि विरागिणी ॥

अपि च—सास्त्रयो गुरुश्चादि[7] मेघवितानम् ।

यदमी मेघवितानं सरसीस्समवेक्ष्य रमन्ते ।
तदपि प्रियया रसवत्या विरसा ग्रहसंकटतायै[8] ॥

आपातालिका च । रसौ[9] गश्च मणिरागः—रसौ द्वौ गुरुश्च मणिरागः ।

यज्जनः कुरुते मणिरागैः अंशुकैश्च परिष्कृतमङ्गं[10] ।
तद्धि[11] वीक्ष्य वधूमनुरक्ता[12] साभिलाषदृशेव च रक्ता[13] ॥

भतयगाश्च[14] चम्पकमाला—

यत्त्यजति स्वं विरहग्लानां चम्पकमालामृदुमत्तेभम्[15] ।
तच्च सरागप्रमदाहेतोः स्वाभिविरक्ता वनिता त्याज्या ॥

पञ्चभिः पञ्चभिश्च यतिः, मात्रासमकं च । मरयगास्तटिन्माला—

यद्दृष्टान्तं[16] विजयं पश्याम एवं धन्या न मोक्षशास्त्रेषु ।
सापि स्नेहे विरागिरागाणां मानोऽभ्राणां[17] पुनस्तटिन्माला ॥१४॥

अथ त्रिष्टुभि—

**एकरूपं म्सौ ज्गौ ग्[18] ॥१५॥**

मसजा गौ च द्वावेकरूपम् ।

भ्रूचापाद्घनपक्ष्मराजिसज्ज्यां त्रासं[19] यन्त्यबलाः कटाक्षकाण्डान्[20] ।
नासौ कुप्यति[21] नैकरूपमास्ते चित्रं हेलिकयान्यमेति भावम् ॥

---

१ 'तो ज्गौ ग्' मै०१ । 'त्जौ ज्गौ' मुद्रिते ।
२. 'त्रिष्टुग्' इत्यधिकं त्रि० । ३. 'गुरु च' मै०१ ।
४. '०तपश्यं' मै०१ । ५. '०वन् खलाः' मै०१ । 'वन् खिलाः' मै०२ ।
६. '०ग्धामुप०' त्रि० । ७. '०धि' मै०१ । ८. 'गृह०' मै०१ ।
९. 'द्वौ' अधिकं त्रि० । १०. 'परिक्षत०' मै०१ । ११. 'तच्च' त्रि० ।
१२. '०रक्ता' मै०२, त्रि० । १३. '०दृशेऽभिविरक्ता' त्रि० ।
१४. 'च' नास्ति मै०२, त्रि० । १५. '०मते०' मै०१ ।
१६. 'यद्दृष्टाष्टं' मै०१, मै०२ । १७. '०ग्राणां' मै०१ ।
१८. मुद्रिते नास्तीदं सूत्रम् ।
१९. 'भ्रूचापला०' '०सज्ज्यात्रासं' मै०२ । '०सजजात्यासं' मै०१ ।
२०. '०ताण्डान्' मै०२ । २१. 'कुडयति' मै०१ ।

दक्षिणान्तिका च ॥१५॥

## इन्द्रवज्रा तौ जगौ ग् ॥१६॥

तौ द्वौ जो गौ च द्वाविन्द्रवज्रा।

यस्येन्द्रवज्राधिकगात्रगर्वा[1] विद्यार्थवंशैश्च यद्यस्य[2] अस्पष्टचर्म।
नश्यत्यथो[3] मन्मथमन्थराणां स्त्रीणां कटाक्षैर्गमितस्य दास्यम् ॥१६॥

## उपेन्द्रवज्रा जतौ जगौ ग् ॥१७॥

जतजा गौ च द्वौ[4] उपेन्द्रवज्रा —

तदैव[5] सिद्धो विजयो[6] वधूनां[7] ध्वंसेष्वनङ्गास्त्रखलं[8]...।
यदा विलासाङ्गमहाङ्गनानामुपेन्द्रवज्रायुधयोरपि श्रीः ॥१७॥

## आद्यन्तावुपजातयः ॥१८॥

इह प्रसङ्गात् विषमवृत्तानि इन्द्रवज्रोपेन्द्रवज्रयोः पादसंकरेणोच्यन्ते। यदा पूर्वोक्तयोस्तयोः पादावर्धस्यादिरन्तो यदि स्यातामेकस्मिन्नेव श्लोके तदोपजातयो नाम वृत्तानि। आभ्यामुपजातय इति वक्तव्ये आद्यन्तावुपजातय इति ब्रुवन्निमे विपरीताख्यानक्याख्यानक्याविति[9] व्यावर्तयति[10]—यदि हीन्द्रवज्रापाद उभयोरर्धयोरादिरेव स्याद् उपेन्द्रवज्रापादस्यान्त्ये आख्यानकी स्यात्। अथोपेन्द्रवज्रापाद आदिरितरोऽन्त्यः विपरीताख्यानकी स्यात्। तस्मादिन्द्रवज्रापाद एव पूर्वार्धस्य पादस्यादिरन्तश्च स्यात्। पूर्वादिः पूर्वस्यादिः[11] परस्यान्त इति वा[12], परादिः[13] परस्यादिः[14] पूर्वस्यान्त[15] इति वा।

यद्वापराधोऽत्र न कामिनीनां ताश्चापि पुंसां नयनैः स्खलन्ति।
स्त्रियः पुमांसश्च तथैव सृष्टा यथा मिथो या उपजातयोऽपि ॥
लज्जा गता क्वापि च लज्जितेव श्रुतं क्वचित् श्रोत्रपुटे निलीनम्।
कुलाभिमानो मुनिरेव मुक्तो मुक्ते वधूभिर्नयनांशुपाशे ॥

---

१. 'द्यो०' '०गुर्वी' मै०१। 'योस्वे०' मै०२।
२. '०वंशैर्यदि चास्य' मै०१, मै०२। ३. '०त्यदो' मै०१, मै०२।
४. 'द्वौ' नास्ति मै०२। ५. 'तथैव' मै०१। ६. 'सिद्धे विजये' मै०१, मै०२।
७. 'वधानां' मै०१। ८. 'खलु' मै०१, मै०२।
९. '०ताख्यानक्याख्यनीन्त्या' कोशेषु। १०. 'व्यावृत्तय इति' मै०१, मै ०२।
११. 'पूर्वस्यादिः' नास्ति मै०१, मै०२। १२. '०स्यादिरिति' मै०१, मै०२।
१३. 'परादिः' नास्ति मै०१, त्रि०। १४. 'परस्यादिः' नास्ति मै०२।
१५. 'पूर्वान्त' मै०२।

**तिष्ठन्तु कामाकुलदृष्टिपाता भावाश्च[१] तेषामुपजातिभेदाः ।**
**एकापि वाणी स्मितमञ्जुरासां करोति पुंसामपरामवस्थाम् ॥**

द्वादशोपजातयः[२] । अयं च न्यायोऽन्यत्र स्यात् । तेन[३] त्रैष्टुभानां वान्येषां वृत्तानां पादास्समाक्षरसंख्या द्वौ द्वावेकभूयं भूत्वा द्वादश द्वादश विषमवृत्तानि भवन्ति । त्रयस्त्रय एकभूयं भूत्वा षट्त्रिंशत् । चत्वारश्चत्वारश्चतुर्विंशतिरिति[४] विषमवृत्तानि । एषां **विषमं च राश्यूनमिति**[५] संख्योक्ता । यत् पुनः क्वचित्—

**एह्येहि फुल्लाम्बुजपत्रनेत्र नमोऽस्तु ते देववराप्रमेय ।**
**प्रसह्य मां पालय लोकनाथ रथोत्तमाद्[६] भूतशरण्य सङ्घे[७] ॥**

इत्यादिषु प्रथमस्य च[८] तृतीयस्य च[९] पादस्य लघ्वन्तत्वं दृश्यते, तदप्येष्वेव विषमेषु लघ्वन्तगुर्वन्तपादसंकरजं[१०] द्रष्टव्यम्, इन्द्रवज्रोपेन्द्रवज्रापादसंकरजं तयोः[११] गुर्वन्तत्वात् । ततश्चैके वर्णयन्ति—गन्त इत्यत्र पादान्तेऽपि ह्रस्वस्य गुरुसंज्ञा विधीयत इति, तदपि प्रत्युक्तं विषमेष्वेव तदुपपत्तेः[१२] । एवं तर्ह्यर्धान्ते तथैवास्तु । नैतद्, आर्यादीनामर्धस्य लघ्वन्तत्वासंभवाद्[१३], दृश्यते च ह्रस्वान्तमर्धम्—**चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य** इत्यादिषु । तदर्थमेवावश्यं[१४] गुरुसंज्ञा विधेया अन्यथा मात्रासंख्यापकर्षात् । तत्तुल्ययोगक्षेमत्वाद्[१५] अन्येषामपि कथ्यते ॥१८॥

**दोधकं भौ भगौ ग् ॥१९॥**

भास्त्रयो गौ च द्वौ दोधकम् ।

**द्यूतवधादिभिरर्थसमीहा देहविपत्फलसाहसकान्तम्[१६] ।**
**दोधकवृत्तमितीह भजन्ते धृष्टविदग्धवधूजनवश्याः[१७] ॥१९॥**

**शालिन्युक्ता[१८] म्तौ तगौ ग् समुद्रऋषयः ॥२०॥**

मो तौ गौ च शालिनी । चत्वारस्सप्त च यतिस्थानम् ।

---

१. 'भावश्च' मै०१, मै०२ ।
२. 'चतुर्दशेति हलायुधः' स चैव युक्तः । ३. 'तेनापि' त्रि० ।
४. 'त्रिशच्चत्वा०' मै०१, मै०२ । ५. पि० छ० ५।४,५॥
६. 'रथो मान्' मै०१, मै०२ । ७. 'सङ्घ' मै०२ । ८. 'च' नास्ति त्रि० ।
९. 'च' नास्ति मै०१ । १०. '०जा' मै०१, मै०२ ।
११. '०करजातयोः' मै०१, मै०२ । १२. '०मेष्वतदु०' मै०१, मै०२ ।
१३. '०तत्वसं०' मै०१, मै०२ । १४. '०मेवाश्यं' मै०१ । १५. 'तदत्र योग०' त्रि० ।
१६. '०कम्' त्रि० । १७. 'दृष्ट०' मै०१, मै०२ । १८. 'उक्ता' नास्ति मुद्रिते ।

नीवीमग्रे संत्रयित्वा वसानाः केशानग्रे संकिरन्तीर्विकीर्य[1]।
लीलां[2] लीलाशालिनीं[3] दर्शयन्तीर्न[4] प्रेक्षन्ते पण्डिता जेतुकामाः ॥२०॥

वातोर्मी[5] म्भौ तगौ गश्च[6] ॥२१॥

मभता गौ च द्वौ वातोर्मी[7]। चकारात् पूर्वयतिरनुकृष्यते।

अन्ये ताभिर्विजिता[8] वाणिनीभिः, भूयो भूयो हृतचित्ता[9] विलासैः।
मुक्त्वा लज्जां कुलधर्मांश्च नित्यान्[10], संसेवन्ते भूतवातोर्मिधर्मम्[11] ॥२१॥

भ्रमरविलसिता[12] म्भौ न्लौ गश्च ॥२२॥

मभनलगा भ्रमरविलसिता[13]। चकाराद् यत्याकर्षः।

दृष्ट्वा वापीर्भ्रमरविलसिता[13] देशांश्चान्यान् वनगिरिसरितः।
कान्तां कामी हृदि बत[14] कुरुते धन्यस्त्वन्यश्शुभमृषिचरितम्॥

वानवासिका च ॥२२॥

रथोद्धता नौ लौ ग् ॥२३॥

रनरलगा रथोद्धता।

यत्र केवलमनोरथोद्धता वाशितापि विकरोति मानसम्।
तत्र सन्निहितवाणिनीजनं श्रद्दधीत विजयाय कः पुमान्॥

अपरान्तिका च[15] ॥२३॥

स्वागता नौ भगौ ग् ॥२४॥

रनभा गौ च द्वौ[16] स्वागता।

पूर्वमेव महिमा मधुहृद्यः ताभिरेव हृदयं हृतशेषम्।
अद्य कृश्यति वपुर्विरहेण स्वागतानि कुशलानि खलस्य॥

उत्पातलिका[17] च ॥२४॥

---

१. 'संचर०' मै०२। २. 'लीला' मै०१, मै०२।
३. '०न' मै०१, '०नीर्द०' मै०२। ४. '०न्ती सन्' मै०१। '०न्तीं न' मै०२।
५. '०र्मिय' मै०१। '०र्मीयं' मै०२। ६. 'च' नास्ति मुद्रिते।
७. '०र्मि' मै०१। ८. '०निर्जि०' मै०२। ९. 'हृदि०' मै०१, मै०२।
१०. 'नित्यां' मै०१। 'नित्यां' मै०२। ११. 'द्रुत०' मै०१, मै०२।
१२. '०तं' मै०२। १३. '०भ्रम०' मै०१, मै०२। १४. 'वतं' मै०१, मै०२।
१५. 'रन...च' इयं व्याख्या नास्ति मै०१, मै०२।
१६. 'च' अधिकं मै०१, मै०२। १७. '०ता०' मै०१।

## वृत्ता नौ स्गौ ग् ॥२५॥

नौ द्वौ सो गौ च द्वौ[1] वृत्ता नाम[2]। वृन्तेति पाठान्तरम्।

क्षपयति मनसिशये स्वाङ्गं रमयति युवतिजने चित्तम्।
निपतति विप्परिणतं वृन्तात् फलमिव विपरिणतं[3] वातात्[4] ॥२५॥

## श्येनी रजौ रलौ ग् ॥२६॥

रजरलगाः श्येनी।

श्येन्यमूषु कामिनीषु या स्मिते दन्तपङ्क्तिरायता विनान्तरा[5]।
श्येन्यसौ स्वयं नरस्य रागिणः चित्तमीनहारिणी किमु स्त्रियः ॥२६॥

## प्रत्यवबोधा भतौ नगौ ग् ॥२७॥[6]

भतना गौ च द्वौ प्रत्यवबोधा।

यद्रसदिव्यान्[7] युवतिकलापादीक्षणबाणान् रतिपतिरस्यन्।
प्रत्यवबोधं हरति नराणां तेन स आस्ते शबरकुलेऽपि[8] ॥

कुड्मलादितिश्रीर्वा[9]। पञ्चसु षट्सु च यतिः। तानवासिका च। अत्र नवभ्यो यदि खलु सगणस्तान्तु जगत्यां ललनाम्। नयभा गौ चेद् वानवासिका—

यदपि नेत्रकलापादनवसितेषोर्विभ्रमबाणात्।
हृदयमभित्त्वा मुञ्चति चित्ते वसति ततोऽयं धन्विषु कामः ॥

षट्सु पञ्चसु च यतिः। उपचित्रा च ॥२७॥

अथ जगत्याम्—

## जगती ॥२८॥

अधिकारोऽयम् आध्यायपरिसमाप्तेः। ननु किमर्थोऽयमक्षरसंख्ययैव गायत्र्यादिवद् जगतीति गम्यते। उच्यते—तोटकं सः[10] इत्यादिषु अनुक्तसंख्येषु द्वादशानामेवाक्षराणां ग्रहणं स्यादिति। अथापि वृथैव पुटद्रुतविलम्बितादीनां द्वादशाक्षरादीनां मध्ये पाठादेव तत्प्रसिद्धेः। एवं तर्हि, पूर्वापरपदार्थवशात् संख्यास्मिन् तन्त्रे नाश्रीयते इति

१. 'गौ द्वौ च' मै०१। २. 'नाम' नास्ति त्रि०। ३. 'परिणतं' मै०१, मै०२।
४. 'वन्तात' त्रि०। ५. 'घनान्तरे' त्रि०।
६. अस्य सूत्रस्य स्थाने 'विलासिनी जौ ज्गौ ग्' तद्व्याख्या च हलायुधीया मुद्रिते।
७. 'मदद्रुसदस्यान्' मै०१, मै०२। ८. 'शबर०' मै०१।
९. 'कुट्मला०' मै०१, मै०२। १०. पि० छ० ६।३२॥

सूचयितुम्, तथा चोक्तादीनां पूर्वस्मात् संख्यानियमो नाश्रितः। समानीप्रमाणीवितानानां[1] पादस्यानुष्टुब् वक्त्रम्[2] इत्यस्मात् परस्माद् अष्टाक्षरत्वं नाश्रीयते। उक्तादीनां तु न पूर्वस्मात् संख्यानियमः[3]। स्वरूपेणोपात्ता संख्या पूर्वस्मादाश्रीयत[4] एव यजुषां षट्, साम्नां द्विः[5] इत्यादिषु। अत एव चात्र संख्या क्वचित् स्वरूपेणोपनीयते क्वचिद् वस्वादिसंकेतैः ॥२८॥

## वंशस्थं[6] ज्तौ ज्रौ ॥२९॥

जतजरा वंशस्थम्।

रसैस्स्पृजन्तीं मदरागविभ्रमान् निषेव्यहालामिव वारवारुणीम्।
पतन्त्यभोका वरवारवारुणीमपि स्ववंशस्थजनोचितक्रियाः[7] ॥२९॥

## इन्द्रवंशा तौ ज्रौ ॥३०॥

तौ द्वौ[8] जरौ च[9] इन्द्रवंशा।

अर्थैर्नमन्तीषु न हार्दसंस्तवैर्यो वारमुख्यास्वजयी तुलास्विव।
तस्मिन्न[10] जातु क्षतकीर्त्तितेजसी श्रीरिन्द्रवंशाभिजनेऽभितिष्ठति ॥३०॥

## द्रुतविलम्बितं न्भौ भ्रौ ॥३१॥

नो भौ द्वौ रश्च द्रुतविलम्बितम्।

नवरसस्य परस्य विकारिकास्वपरसास्वतिरूपगुणासु च।
रुचिफलं गणिकासु सुखं नृणां[11] द्रुतविलम्बितमग्निशिखास्विव[12] ॥३१॥

## तोटकं सः ॥३२॥

सगणाश्चत्वारश्चेत्[13] तोटकम्।

विटवीरजनस्य गृहाः कुलटाः स्वजनानपराद्धशराः[14] पुरुषाः।
सुतमस्य महासमरस्य कथा अपि तोटकगन्धकनाटकवाक् ॥

---

१. द्र०—पि० छ० ५।६–८॥ २. पि० छ० ५।९॥
३. 'नियमं' मै०२, मै०२। ४. 'पूर्वासमाश्री०' मै०१, मै०२।
५. पि० छ० २।६,७॥ ६. '०स्था' मुद्रिते। ७. '०क्रियाम्' मै०२।
८. 'द्वौ' नास्ति त्रि०। ९. 'चेद् त्रि०।
१०. 'तस्मान्न' मै०१, मै०२। ११. 'सुखान्नृणां' मै०१, मै०२।
१२. '०खामिव' मै०१, मै०१। १३. 'चेद्' नास्ति मै०१, मै०२।
१४. '०रार्धशराः' मै०१, मै०२।

नाट्ये संरम्भप्राया वाक्[1] तोटकम्। एवं सः[2] षट् चेत् धृतौ[3] ललितं नाम वृत्तं स्यात् ॥३२।

पुटो नौ म्यौ वसुसमुद्राः ॥३३॥

नौ द्वौ मयौ च पुटः। अष्टौ चत्वारश्च यतिस्थानम्।

विटजनसहवासाक्षुन्ननारीं रुचिरसहजवाचा सद्भिरार्यैः।
अणकमपि भजन्ते सुस्वभावाः पुनमिव[4] कुसुमानां पुण्यगन्धाः[5] ॥

अणकं गर्ह्यम्[6] ॥३३॥

प्रमुदितवदना नौ रौ ॥३४॥

चञ्चलाक्षी नौ राविति[7] केचित् पठन्ति।

व्रजतु मदनचञ्चलाक्षीं सतीं प्रमुदितवदनां च वेश्याङ्गनाम्।
त्यजति हि धनलोलुपां तां स्मरो न सुरतिमिति[8] सालभञ्जीमिव ॥३४।

जलोद्धतगतिः ज्सौ ज्सौ रसर्तवः ॥३५॥

जसौ जसौ जलोद्धतगतिः। षड् रसाः षड् ऋतवश्च[9] यतिस्थानम्।

गुणोद्धतगतिः कुलोत्तरवधूः धनोद्धतगतिः[10] सुमाननवधूः।
तनूद्धतगतिः पणोचितवधूर्[11] यथैव कुरतो[12] जलोद्धतगतिः ॥३५॥[13]

भुजङ्गप्रयातं यः[14] ॥३६॥

याश्चत्वारः।

---

१. 'नाट्ये वाक्' नास्ति मै०१, मै०२। २. 'सः' नास्ति मै०१, मै०२।
३. यथाकोशम्? 'द्रुतौ' मै०१। ४. पुटमिव ?
५. 'त्यजति मिव' इत्यग्रिमसूत्रोदाहरणस्योत्तरार्धोऽधिको मै०२।
६. 'अण·· म्' नास्ति मै०२, त्रि०।
७. द्र०—मुद्रिते हलायुधव्याख्यायुते 'चञ्चलाक्षिका नौ रौ' (६।३७)।
८. 'सुरतिरिति' मै०१, मै०२। ९. 'च' नास्ति मै०१, मै०२।
१०. '०ति' मै०१, मै०२। ११. '०वरः' मै०१, मै०२।
१२. 'कुलना' मै०१, मै०२।
१३. इतोऽग्रे 'कुसुमविचित्रा न्यौ न्यौ, तत्तं नौ म्रौ, चञ्चलाक्षिका नौ रौ' इति त्रिसूत्री व्याख्यायि हलायुधेन। तत्राद्यसूत्रद्वयं तद्व्याख्यानं च कोशेषु नास्ति। १४. 'याः' मुद्रिते।

गलत्कञ्चुकाङ्गैः बहिस्स्नेहकान्ता[1] परेष्वासजन्ती[2] रसं[3] प्राणमूल्यम् ।
भुजङ्गप्रयातं पदं लिप्समाना[4] भुजङ्गीव वक्रा न[5] वेश्या निवेश्या ॥

अर्धे यतिरिति केचित्[6] । एवं षट् चेत् धृतावाप्यायनी[7] नाम वृत्तं स्यात् ॥३६॥

## स्रग्विणी रः[8] ॥३७॥

रश्चत्वारः[9] स्रग्विणी भवति[10] ।

चन्द्रकान्तानिभा चन्द्रशालाशुभामन्तवेश्याङ्गनामण्डितस्रग्विणी ।
यत्र तत्र स्मरोऽनङ्ग एवाङ्गवान् स्यादिति प्रायशश्षङ्गसंसत्कथाः ॥

अत्राप्यर्धे यतिरिति केचित्[6] ॥३७॥

## हिमविकरा[11] न्यौ न्यौ ॥३८॥

नयौ द्वौ हिमविकरा[11] ।

नयगणयुग्मं रसयुगयत्या[12] हिमविकरा[11] स्याद् गजललितं वा ।
कुसुमविचित्रेत्यपरमतेऽसौ[13] मदनविकारेऽत्यपरमतेऽपि[14] ॥

वानवासिका च ॥३८॥

## शशप्लुता त्यौ त्यौ[15] ॥३९॥

तयौ द्विकौ शशप्लुता । मणिमालेत्यन्ये ।

स्मृत्याप्यधिपादं[16] मञ्जरीकशिञ्जाः[17] कर्णौ[18] गुरुपाशौ[19] हस्ते वलयानि ।
कण्ठे मणिमालां[20] वेशेषु[21] वधूनां कामग्रहपीडां को नाम सहेत ॥

अर्धे यतिः ॥३९॥

## प्रमिताक्षरा स्जौ सौ ॥४०॥

सजौ सौ च द्वौ प्रमिताक्षरा ।

---

१. '०कारैः' मै०१, मै०२ । २. '०जन्ता' मै०१ । ३. 'रस' मै०१, मै०२ ।
४. 'पदङ्घ्रिस्समाना' मै०१, मै०२ । ५. 'वक्त्रेव' मै०१, मै०२ ।
६. द्र०—हसायुधीयव्याख्या । ७. 'ध्रुतो व्याप्या०' मै०१ । 'घृतो व्याप्या०' मै०२ ।
८. 'राः' मुद्रिते । ९. 'रा०' त्रि० । १०. 'भवति' नास्ति मै०१, मै०२ ।
११. '०कारा' मै०२ । १२. 'वस०' मै०१ ।
१३. '०प्य०' मै०१ । द्र०—मुद्रिते हलायुधव्याख्यायुते पि० छ० ६।३५॥
१४. '०प्यु०' मै०१ । '०प्य०' मै०२ । १५. मुद्रिते नास्तीदं सूत्रम् ।
१६. '०पाद' त्रि० । १७. 'मञ्जीरक०' मै०१ । 'मञ्चीरक' त्रि० ।
१८. 'कण्ठे' मै०१, मै०२ । १९. "०पादौ" मै०१, मै०२ ।
२०. '०ला' मै०१ । २१. 'के०' मै०१ ।

प्रमिताक्षरेण वचनेन हितं कथयामि ते शृणु च तत् कुरु च ।
गणिकाश्रितामपि पुरीं सततं भुजगश्रितमिव[1] दरीं[2] जहिहि ॥४०॥

वैश्वदेवी मौ याविन्द्रियऋषय:[3] ॥४१॥

मौ द्वौ यौ च द्वौ[4] वैश्वदेवी । पञ्च सप्त च यतिस्थानम् । चन्द्रकान्तेत्वन्ये ।

पूर्वाषाढानां चापभावे सभावातीत्य द्रष्टॄणां[5] मूलसंस्थानवृत्तेः ।
अग्रे कुम्भस्था[6] युक्ता चन्द्रकान्तारूपा जीवा स्याद्[7] वैश्वदेवीव तारा ॥४१॥

कान्तोत्पीडा म्भौ[8] स्मौ समुद्रवसव:[9] ॥४२॥

मभसमाः कान्तोत्पीडा । चत्वारोऽष्टौ च यतिस्थानम् । जलधरमालेत्यन्ये ।

कुर्वत्येषा[10] कुलभवकान्तां[11] पीडां विभ्रंषं च स्थिरकुलमर्यादानाम् ।
भ्रश्यस्नेहा[12] क्षणमिव नीलोरागा दोषैर्वेश्या जलधरमालातुल्या[13] ॥४२॥

[14]नवमालिनी नजौ भ्यौ[15] ॥४३॥

नजभया नवमालिनी ।

वरजनदूषितासु[16] सहवासात् परपरिधानक्लृप्तवसनासु[17] ।
अभिनवमालिनीषु परमाल्यैः पतति मनो न वारवनितासु ॥

अपि च—नो जौ यश्च[18] तामरसं वा[19] ललितपदं वा ।

भ्रूकुटिकटाक्षविलासविकारैः[20] कृतविकृते गणिकावदनस्य ।
कथमिव तामरसं तुलनाभूत् ललितपदं यदवाप्य नलिनं च[21] ॥

नभजया[22] द्रुतपदमुखरं[23] वा कलहंसो वा ।

---

१. 'शुषगोन्नतामिव' मै०१ । 'भजगारूतामिव' मै०२ । 'भुजगाग्नितामिव' त्रि० ।
२. 'तरी' मै०२ । 'तरां' त्रि० । ३. अग्रिमसूत्रेण विपर्यासः ।
४. 'द्वौ' नास्ति त्रि० । ५. 'द्रष्ट्राना' मै०२ ।
६. '०स्या' मै०१ । '०स्य' त्रि० । ७. 'स्या' मै०१ । ८. 'म्भौ' मुद्रिते ।
९. 'स⋯वः' नास्ति मुद्रिते । १०. '०र्वि०' मै०१, मै०२ ।
११. '०न्ता' मै०१, मै०२ । १२. 'भृश्य०' मै०१ । १३. '०माल०' मै०१ ।
१४. इतः पूर्वं 'वाहिनी त्मौ म्यावृषिकामशराः' मुद्रिते, व्याख्यायि च हलायुधेन ।
१५. 'इति' अधिकं मुद्रिते । १६. '०बणीसु' मै०१ । '०षिणीसु' मै०२ ।
१७. 'परिपरि०' मै०१ । १८. 'यस्य' मै०१ । १९. 'वा' नास्ति मै०१, मै०२ ।
२०. 'विकास०' मै०१, मै०२ । २१. 'च' नास्ति मै०१, मै०२ ।
२२. 'जभजया' त्रि० । २३. 'दूत०' त्रि० ।

द्रुतपदमुखरनूपुरमेवाव्रजति[1] भग्नकलहंसरुतश्रीः[2] ।
इति गृणाति गणिकां परधर्मः न परिपश्यति गुणान्[3] यदि तस्याः ॥

नभजरा मत्तकोकिलं प्रियंवदा वा ।

सकलचित्तमिति मत्तकोकिलध्वनिरियं सुखयति प्रियंवदा वेणी ।
इति च[4] शंसति धनायना क्वचित् कलरवैरुपनतां पणस्त्रियम् ॥

द्वे इमे अपरान्तिके च । तभजरा[5] ललिता—

अङ्गानि सङ्गललितानि विभ्रमाश्छत्रा[6] विचित्रस्वना च वागिति ।
एतानि वेत्ति गणिकासु कामुको[7] नार्थन्ति[8] सापि मदनस्य साधुता ॥४३॥

इति श्री भगवतो यादवप्रकाशस्य कृतौ
पिङ्गलनागछन्दोविचितिभाष्ये
षष्ठोऽध्यायः समाप्तः ॥६॥

---

१. '०द्दा०' मै०२ । २. '०हृत०' मै०२ ।
३. 'गुणिन्' मै०१, मै०२ । ४. 'च' नास्ति मै०२ ।
५. 'ततजरा' मै०१ । 'तंजरा' मै०२ ।
६. '०माचित्रा' मै०१ । '०माश्चित्र' मै०२ । ७. '०कासुखात्मको' त्रि० ।
८. 'नापान्ति' मै०१, मै०२ ।

# सप्तमोऽध्यायः

इदानीमतिजगत्यादयोऽतिच्छन्दसोऽधिक्रियन्ते । तत्रातिजगत्याम्—

प्रहर्षिणी म्नौ ज्रौ ग् त्रिदशकौ[1] ॥१॥

मनजरा गुरुश्च प्रहर्षिणी । त्रिकदशकौ[2] यतिस्थानम्[3] ।

छित्त्वार्धे[4] युवतिजने च[5] सङ्गपाशानाध्याय त्रिभुवननाथनाथमीशम् ।
यस्तिष्ठन् यमनियमादिकाङ्गयोगो मोक्षाख्यां व्रजति दशां प्रहर्षिणोनाम् ॥१॥

रुचिरा ज्भौ सजौ ग् समुद्रनवकौ[6] ॥२॥

जभसजगा रुचिरा । चत्वारो नवकं च यतिस्थानम् ।
विभावरीमिह रुचिरामभोच्छतोः परस्परं शशितमसोर्जिगीषतोः ।
पुनः पुनः क्षयमुदयं च पश्यतां नृणां श्रियै कलहकथा कथ भवेत् ॥२॥

मत्तमयूरं म्तौ य्सौ ग् च[7] ॥३॥

मतयसगा मत्तमयूरम् । चकारात् पूर्वयत्यनुकर्षः ।

धान्यैर्वन्यैर्वर्तितुकामः फलमूलैः ग्लानिं स्वां स्वां[8] न स्मरतीत्यत्र विचित्रम् ।
कण्ठाश्लेषश्लाघिजनेनापि विनासावभ्रेऽभ्रे यन्मत्तमयूरं वनमेति ॥

अपि च—तभसजगा लक्ष्मीः ।

लक्ष्मीवता पुरुषवरेण साध्यते[9] धर्मो विमुक्तिरपरमप्यभीप्सितम् ।
लक्ष्मीवतैव कुपुरुषेण हीयते सर्वं ततश्च न चपलस्य[10] सा शुभा ॥

सजौ द्विकौ ग्[11] च विजया[12] सुमङ्गला, सुनन्दिनी वा ।

चरितं यशांसि विजयान्[13] सुमङ्गलां रमणीं च लोकरमणीं सुनन्दिनीम् ।
सकलं करोति विमलं धनागमः[14] पदवीं तु मोक्षपदनिर्मलीमसाम् ॥

---

१. 'त्रिदशकौ' नास्ति त्रि० । 'त्रिकदशकौ' मुद्रिते ।
२. 'त्रिदशकौ' मै०१, मै०२ ।
३. पूर्वपरवाक्ययोर्विपर्यासः कोशेषु ।
४. 'भित्त्वा' मै०२ ।
५. '०जनेषु' त्रि० ।
६. 'चतुर्न०' मुद्रिते । 'यतिः' अधिकं त्रि० ।
७. 'समुद्रनवकौ' मुद्रिते ।
८. 'स्वानां' मै०२ ।
९. 'साध्येत' मै० १ ।
१०. 'न च फलस्य' मै०१, मै०२ ।
११. 'ग्' नास्ति मै०२ ।
१२. '०जय' मै०२ ।
१३. '०यात्' मै०१, मै०२ ।
१४. 'त्यना०' मै०१, मै०२ ।

सजौ सौ गश्च[1] भ्रमरः। सजौ द्वौ सौ गुरुश्च भ्रमरः[2]।

कलं या[3] चिराय चिनुते निकरेभ्यो धनमेक एष मधुवाक् भ्रमरौघम्।
अपरः पुनस्तदपहर्तुमुपायांस्तनुते सदा मतिमतामतियुक्तः ॥३॥[4]

अथ शक्वर्याम्—

असंबाधा म्तौ न्सौ गाविन्द्रियनवकैः ॥४॥

मतनसा गौ च द्वावसंबाधा। पञ्च नवी च यतिस्थानम्[5]।

आश्लिष्या लोलास्सुरभिसुमनसः कान्तास्वेदिव्यायम्य घृतरसपृषतव्रातैः।
एकान्तार्थिभ्यो घनवनविरमद्वेगो वातो व्याचष्टे वनवसतिमसंबाधाम् ॥४॥

अपराजिता नौ रसौ ल्गौ च स्वरऋषयः ॥५॥

नौ द्वौ रसलगाश्च[6] अपराजिता। सप्त सप्त यतिः।

प्रसवसुरभयो निलीनमधुव्रताः तरुणकिसलया वनश्रिय आसताम्।
इयमपि पुरजा लता पुरवासिनां हरति कुसुमिता मनांस्यपराजिता ॥५॥

प्रहरणकलिका[7] नौ भ्नौ ल्गौ च ॥६॥

नौ द्वौ भनलगाश्च प्रहरणकलिका। चकारात् पूर्वयत्यनुकर्षः[8]।

पिकरुतहृषिता परिगतपवना तरुगतनयना मधुकररसिका।
मृगमदमुदिता वन इह जनता प्रचलति मदनप्रहरणकलिका ॥
वानवासिका च ॥६॥

वसन्ततिलका तभौ जौ गौ ॥७॥

तभौ जौ द्वौ गौ च वसन्ततिलका ॥७॥

सिंहोन्नता काश्यपस्य ॥८॥

एषैव सिंहोन्नतेति काश्यपस्याचार्यस्य[9] मतेन वा ॥८॥

उद्धर्षिणी सैतवस्य ॥९॥

एषैवोद्धर्षिणी सैतवस्याचार्यस्य मतेन वा।

---

१. 'स्गोश्च' मै०१। २. 'सजौ ··मरः' नास्ति त्रि०।
३. 'कलया' मै०१, मै०२।
४. इतोऽग्रे 'गौरी नौ न्सौ ग्' इति सूत्रं हलायुधीयवृत्तियुतं मुद्रिते।
५. 'यतिः' मै०१। ६. 'रसलगौ द्वौ' त्रि०। ७. '०लिता' मुद्रिते।
८. '०यत्याकर्षः' मै०१, मै०२। ९. '०पाचा०' मै०२।

सिंहोन्नतार्कसमयाप्तपयोधरश्रीः[१] हेमन्तहेमकमना शरदभ्रवासाः।
उद्धर्षिणी शुचिगुणैः[२] शशिराहुकान्ता[३] कान्ता वसन्ततिलका च गिरिर्मुमुक्षोः[४] ॥

नरौ द्विकौ लगौ च[५] सुकेतुमाला।

हृदि यदम्बुजस्य मुकुलं सुकेसरं वहति तत्र यो हरिमनन्तमव्ययम्।
स खलु कृत्यमार्जयति शोभनं धनं न[६] हृदि शत्रुभोग्यधनभारमुद्वहन्[७] ॥

भजसना[८]गौ च द्वौ स्खलितकान्तिः।

प्राग् बहुधनो बहुयशाश्च भुवि भूत्वा दैवरचिताद् यदि पुनश्चरति भैक्षम्।
जीवति कथं पुनरसौ स्खलितकान्तिः प्राप्तयशसां हि मरणं वरमकीर्तेः ॥

इन्द्रवदना लघुरुपान्त्य इह यदा ॥९॥

अथातिशक्वर्याम्—

चन्द्रावर्ता नौ नौ स् ॥१०॥

नाश्चत्वारः सश्च चन्द्रावर्ता। शशिकलेत्यन्ये। एतामेव शशिकलेति यावत्।

सुरसदसि हरिभजत सरसिजां
विषमशररिपुरतिकृशशशिकलाम्।
विषमुरगकुलममृतममरगणः
कुटिलतरविधिरचितमिदमसमम् ॥

सप्तस्वष्टसु च[९] यतिः ॥१०॥

मालतु नवकौ चेत् ॥११॥

चन्द्रावर्तैव षण्णव च[८] यतिश्चेन्माला।

स्रजमिव किल परशिरसि विनिहितां
श्रियमपि दृढमपि दधति परगनाम्।
परपरिहितसिचमिव परवनितां
परतनुमिव निजतनुमपि कुकवयः ॥११॥

मणिगणनिकरो[१०] वस्वृषयश्चेत्[११] ॥१२॥

चन्द्रावर्तैव अष्टसु सप्तसु यतिश्चेन्मणिगणनिकरः।

---

१. '०तात्क०' मै०१, मै०२। २. 'शिशुगुणैः' मै०१, मै०२।
३. 'शिशिरालकान्ता' मै०१, मै०२। ४. '०र्रि मु०' मै०१।
५. 'च' नास्ति मै०१, मै०२। ६. 'न' नास्ति त्रि०। ७. '०हन्' मै०२, त्रि०।
८. 'षण्णवति' मै०१। ९. '०हत०' मै०२। १०. '०गुण०' मुद्रिते।
११. 'चेत्' नास्ति मुद्रिते।

परजनयुवतिषु[1] कृतरणरणिकः
कुलमपदशयति तिरयति सुयशः।
स्थगति गुरुमपि गुणगणमखिलं
कुसुमितरुचिमिव मणिगणनिकरम्॥

चित्रा च। इदमतिशक्वर्यामन्तेगुरुकं वृत्तमीदृशम्। गायत्र्यां वृत्तमभिजिद्, उष्णिहि सरलं, धृतौ[2] विमलम्, अतिधृतौ[3] शुकपदं, प्रकृतौ कनकलता, अभिकृतौ समकम्॥१२॥

मालिनी नौ म्यौ[4] यश्च[5] ॥१३॥

नौ द्वौ मो[5] यौ च द्वौ मालिनी। चकारात् पूर्वयत्यनुकर्षः।

परकपटमयीनां[6] पूर्ववत् सुस्थितानां
निदृढगुणशतानामध्वगैस्सङ्गतानाम्[7]।
नहि गुणलयनीकस्तुल्यमन्यद्वधूना-
मिति विदपवृणीते मण्डिता मालिनीस्ताः॥

नान्दीमुखमिति[8] भरतः। एषैव[9] शक्वर्याम्—करिमकरभुजा स्याद्वृत्तमङ्गं विना। अपि च—नो जौ द्वौ भरौ चारविन्दम्।

भवति मुखं युवतेस्सपक्ष्म सकर्णिकं[10]
भ्रमरनिपानपदं विकचं श्रिया।
न तदरविन्दसमं तथापि[11] मतं यतो
जलदृढसङ्गदं[12] सजालदशं सदा॥

इदमेव तृतीयचतुर्थगणयोर्व्यत्यासात् प्रभद्रकम्। रनौ भौ द्वौ रश्च सुन्दरं वा, रमणांशुकं वा, मणिभूषणं वा—

सुन्दरं वदति धारयते रमणांशुकं
दर्शनाय च करोति निजं मणिभूषणम्।
एवमादिविधिना वनिता [न]यते वशं
तत्र पण्डितजनो न विमुह्यति नापरः॥१३॥

अथाष्टौ—

---

१. 'परि०' मै०१, मै०२। २. 'दृतौ' मै०१।
३. '०ध्रुतौ' मै०१। ४. 'यू' मुद्रिते। ५. 'मौ' कोशेषु।
६. '०बधूनां' मै०१। '०मधूनां' मै०२। ७. '०मध्यगै०' मै०१।
८. 'नन्दी०' मै०१, मै०२। ९. 'एष्वेव' मै०१, मै०२। १०. '०र्नि०' मै०१।
११. 'तथापित' मै०१। 'तथावित' मै०२। १२. '०द्रुढ०' मै०१।

ऋषभगजविलसितं भ्रौ नौ न्गौ स्वरनवकौ ॥१४॥

भरौ नास्त्रयो[1] गुरुश्च ऋषभगजविलसितम् । सप्त नव च यतिः ।

पिङ्गलनागशास्त्रमिव गहनमृषिगतं
धीर्मम पक्ष्मवर्त्म कथमनुजिगमिषति ।
युज्यत एव वा तदनुविशति हि हरिणी
काननमुद्धताङ्गवृषभगजविलसितम् ॥

अपि च—नो जास्त्रयो[2] रगौ च वाणिनी ।

यदपि मतं स्वयमेव विनश्यति स्मरोऽयं
सकलसुखानुभवेन निरिन्धनो यथाग्निः ।
न तदुचितं पुनरेव नरे हि वाणिनीना-
मभिसरणैः[3] प्रवहत्ययमिन्धनैरिवाग्निः ॥

इदमेव सप्तमाष्टमयोः लघुगुर्वोर्व्यत्यासात् केषांचिद् वारुणी ॥१४॥

अथात्यष्टौ—

हरिणी न्सौ म्रौ स्लौ ग् रससमुद्रऋषयः[4] ॥१५॥

नसमरसलगा हरिणी । षट् चत्वारस्सप्त च यतिः ।

विचरतु वने वन्यैर्जीवन् नरो हरिणीसुखं
श्रयतु यदि वा नानासस्यैर्नवैर्हरिणी भुवः ।
मदनहरिणीस्तन्वङ्गार्धा करोतु सुखा स्त्रियः
सततमथ[5] चामोक्षं याचेन्महाहरिणीं हरेः ॥

इह यदि लघवः षट् पूर्वं सा तदा ललितं धृतौ । यदि च दशकाद् गोऽन्योऽपि सा धृतौ[6] हरिं त्रिपदम् ॥१५॥

पृथ्वी ज्सौ ज्सौ य्लौ ग् वसुनवकौ ॥१६॥

जसौ द्विकौ यलगाश्च पृथ्वी । अष्टौ नव[7] च यतिस्थानम् ।

नृपोऽपि शयने क्वचित् स्वपिति तण्डुलप्रस्थभुक्
परोऽपि लभते सदा फलमिदं कथंचिज्जनः ।
वृथैव मनुते नृपस्य हि जलाशयैस्सप्तभिः
वधूमिव कुलोद्भवामनुभवामि पृथ्वीमिति ॥१६॥

---

१. 'नस्त्रयो' मै०१, मै०२ । २. 'यास्त्रयो' त्रि० । ३. '०भिः०' मै०१ ।
४. 'ग् ऋतुस०' मुद्रिते । ५. '०मघ' मै०१ । ६. 'धृतो' मै०१, मै०२ ।
७. 'अष्टनवकौ' मै०१, मै०२ ।

वंशपत्रपतितं भरौ नभौ नलौ ग् दिगृषयः ॥१७॥

भरनभनलगा वंशपत्रपतितम् । दश सप्त च यतिस्थानम् ।

सत्सु सतत्त्वबुद्धिरुदिता मनउपशमनी
क्षुद्रजनाश्रितेषु यदि सा बहु मुखरयति ।
जात्यमणोऽव्वविक्रियमिदं[1] जगदपि विशरति
क्ष्मा चित्रवंशपत्रपतितं[2] भृशमपि नदति[3] ॥१७॥

मन्दाक्रान्ता मभौ न्तौ तगौ ग् समुद्रतुस्वराः ॥१८॥

मभनाः तौ च द्वौ गौ च मन्दाक्रान्ता । चत्वारः षट् सप्त च यतिस्थानम् ।

अत्याक्रामेत् सुमनसमितं[4] वल्लभं स्वामिव स्त्रीं
मन्दाक्रान्ता नहि रसकरी शोभनापीक्षुयष्टिः ।
नैवाक्रामेत् खलपरिषदं वारमुख्यामिव स्त्रीं
मन्दाक्रान्ताप्युरगवनिता यद्व भवत्येव भीत्यै ॥

अष्टयामेषा मदनललिता तसौ चेद् दशकात् । भाराक्रान्ता भवति दशकाद् यदा मगणौ गुरू कुर्यात् । षट् चेल्लघव इह तदा स्याद् धृतौ चन्द्रलेखा ॥१८॥

शिखरिणी यमौ नसौ भलौ गृतुरुद्राः ॥१९॥

यमनसभलगाशिखरिणी । षट् च एकादश च यतिस्थानम् ।

अपत्यं वा भव्यं द्रविणमथवा स्यादुपचितं
वधूर्वा चार्वङ्गी यदि वसतु गेहेऽपि पुरुषः ।
न चेत् सर्वं हित्वा विशतु वनमुग्राय तपसे
कथं भुङ्क्ते नाज्यं न दधि न च मृष्टां शिखरिणीम् ॥

धृतौ तु क्रीडेयं यदि त त स गौ द्वौ द्वादश परौ ग्लौ । नजभा जौ लगौ च नर्कुटकम् । नजभा जौ द्वौ लगौ च नर्कुटकम्—

निवसतु नाम वेश्मनि कथंचिदयं[5] पुरुषो
यदि रतिमूलयौवनवती वनितास्ति गृहे ।
अथ न हि सा न तद्व गृहमवंति गृहाश्रमकं
न खलु मखं मुखाह्वयपदं गतनर्कुटकम् ॥

१. '०क्र०' मै०१ । '०क्री०' त्रि० ।
२. '०त्रतवंश०' मै०१ । '०त्रितवंश' मै०२ । ३. 'न ददति' मै०२ ।
४. 'सुजनसदृशं' मै०१, मै०२ । ५. '०दियं' मै०१ ।

यतिरिह सप्त षड्[1] जलधिजा यदि कोकिलकम्[2] ॥१९॥

अथ धृतौ—

**कुसुमितलतावेल्लित मतौ न्यौ यानिन्द्रियरसस्वराः[3] ॥२०॥**

मतनाः याश्च त्रयः[4] कुसुमितलतावेल्लिता[5]। पञ्च षट् सप्त च यतिस्थानम्।

**एषा प्राक् तावत् कुसुमितलतावेल्लिता[9] चञ्चरीकै-**
**रस्यां मातङ्गाः पुनरविकटा गर्वयन्त्येव भृङ्गान्[6]।**
**एतान् गन्धार्थे दिशि दिशि भृशं लोलयन्ति प्रवाता[7]**
**नूनं भृङ्गत्वं चपलमनसां सन्निधौ दुःखहेतुः॥**

इहाप्यादौ स्याच्[8] चेत् लघुरतिधृतौ मेघविस्फूर्जितं[9] स्यात्, रम्भा वा सुवृत्ता वा। षट् चेत् पञ्चभ्यो लघत्र इह तदा पुष्पदामातिधृत्याम्[10]। प्रकरणाद् द्वावेतौ यदि युगपदियं विद्धि शोभां कृतिस्थाम्। अपि च—नौ[11] मौ द्वौ यौ चानङ्गलेखा—

**जलजनहृदि प्रागेवासङ्ग्याहारिभिर्वन्द्रावै-[12]**
**श्चिरपरिचितान्यस्यत्येषोर्वीमङ्गनानङ्गलेखाम्[13]।**
**पुनरपि च तां निष्पत्राकृत्यामन्मथं वर्णयन्तः**
**कठिनहृदयाः कानेते लोकान् काव्यकारा[14] व्रजन्ति॥**

षड्भिः पञ्चभिः सप्तभिश्च यतिः ॥२०॥

अथातिधृतौ—

**शार्दूलविक्रीडितं म्सौ ज्सौ तौ गादित्यऋषयः ॥२१॥**

मसजसाः तौ द्वौ गश्च शार्दूलविक्रीडितम्। द्वादश सप्त च यतिस्थानम्[15]।

**मन्ये धन्यजनस्य कौशलमिदं वृद्धाघविध्वंसि यत्**
**कृत्वा स्निग्धविदग्धविभ्रमरसश्लाघ्यास्सखीर्वाणिनीः।**
**वैदग्ध्यं मकरध्वजाय भजते हर्म्यस्थलेऽभ्रंलिहे**
**शैले वा मृगशीलमिच्छति विना शार्दूलविक्रीडितम्॥**

---

१. 'सप्तर्षं' मै०१। २. '०लम्' मै०२।
३. '०सर्षयः' त्रि०। '०यत्स्वराः' मुद्रिते।
४. 'यास्त्रयः' मै०१, मै०२। ५. '०तललिता०' त्रि०। ६. 'भृङ्गान्' मै०१।
७. '०तान्' मै०१। ८. 'स्याच्' नास्ति मै०१, मै०२। ९. '०ता' त्रि०।
१०. '०धा०' मै०१, मै०२। ११. 'न्सौ' मै०१।
१२. '०न्द्राव०' मै०१। '०न्दाव०' मै०२।
१३. '०लेखा' मै०१। '०लेखम्' मै०२। १४. '०कारान्' मै०१, मै०२।
१५. 'यतिः' मै०१।

इदमेव कृतौ यदि लोऽन्यो विनतो मुखतो लतश्च मुखजो मत्तेभविक्रीडितम्।
अपि च—जसौ[1] त्रिकौ गश्च रतिलोला[2]।

यदा खलजनो गदोद्यमकरं विलोकयति मृत्यु
गतश्च[3] नरकेऽपि कर्मफलजं विपत्तिशतशाली।
तदाशनमपि[4] त्यजेदतिभयानकः किमु रहे-
यापरस्य महतो जनस्य वनितास्वनित्यरतिलीलाम्[5] ॥२१॥

अथ कृतौ[6]—

कृतिस्सुवदना[7] म्रौ भ्नौ यभौ ल्गौ स्वरर्षिरसाः[8] ॥२२॥

कृतिरित्यधिक्रियते। मरभनयभलगास्सुवदना। द्वौ सप्तकौ षट्कश्च यतिः। कृतिग्रहणमुत्तरार्थम्। वक्ष्यते—ग्लिति वृत्तम्[9] इति। तत्र विंशतेरक्षराणां ग्रहणार्थम्। अत्र पूर्वपरपादार्थवशात् संख्यानियमो नाश्रीयत इत्युक्तम्।

न्यस्तार्थेषूत्तमादिगुरुषु[10] लघुषु तिष्ठत्यनलसया[11]
तिष्ठन्त्येवाश्रवादेशिशरसि[12] च लषिता[13] न्यस्तास्सुमनसः।
शक्यं वा दुष्करं वा तदनु न कुरुते कार्यं गुणवति
प्राधान्यं प्रेष्यतां वा व्रजति वरवधूर्दत्तसुवदना[14] ॥२२।

ग्लिति वृत्तम् ॥२३॥

गुरुर्लघुर्गुरुर्लघुरित्यावृत्त्या कृतौ[15] वृत्तं नाम वृत्तम्।

मृद्वनल्पशिल्पतल्परम्यहर्म्यमावसा[16] धवातपस्य[17]
नव्यगव्यशालिशालिभक्तभुक्तिमाचरा धवातपस्य।
कामकालकान्तकार्यकारिकामिनीं व्रजा धवातपस्य
वित्तमप्रमत्त उत्तमं समां जयाधवार्यवृत्तमेव॥

अपि च—नो भौ द्वौ मस्सौ द्वौ लगौ चोज्ज्वला[18] मुद्रा वा।

---

१. 'असौ' मै०१, मै०२।
२. '०कौ मयूरगतिलीला' मै०१, मै०२। ३. 'गतं च' मै०२।
४. '०सन०' मै०१। ५. '०सत्य०' मै०१। ६. 'कृत्याम्' त्रि०।
७. 'कृतिः' नास्ति मुद्रिते। ८. 'ऋषिस्वरर्तवः' मुद्रिते।
९. पि० छ० ७।२३॥ १०. 'न्यक्तार्थेपूक्तमाधि०' मै०१। '०माधि०' मै०२।
११. '०त्यान०' मै०१। '०लनया' मै०२। '०लसा' त्रि०।
१२. '०तिष्ठत्ये०' मै०१। १३. '०शि०' मै०१।
१४. '०घूदत्तं सु०' मै०१, मै०२। १५. '०वृत्यावृत्यात्तौ' मै०१। '०वृत्तौ' मै०२, त्रि०।
१६. '०मापसा' मै०१। १७. 'ध्वा०' त्रि०। १८. '०लम्' मै०१' मै०२।

प्रकृतयस्त्रिगुणा महदाद्यास्सप्त तथा गुणसंहति-
विकृतयोऽपि च षोडश तासां चेतयिता दृशिरुज्ज्वलः।
विकृतयोऽवयवाश्च तदीयास्सर्वं इमे तदिमं हरिं
विदुरिति श्रुतिनिरसाय मुद्रासंग्रथितं पदम् ॥

एकादशसु नवसु च यतिः ॥२३॥

अथ प्रकृतौ—

**स्रग्धरा म्रौ भ्नौ यौ य् त्रिस्सप्तकाः ॥२४॥**

मरभना याश्च त्रयः स्रग्धरा। त्रयस्सप्तका यतिः।

पश्यन्तीमे वधूनां कृशतरमुदरं तासु भोग्यस्य कार्यं
वृद्धाः[1] पश्यन्ति तासां स्तनघनजघनेनेह दुःखस्य वृद्धिम्।
भ्रूभङ्गापाङ्गदृष्टिस्मितभुजविकृतिः[2] विभ्रमानान्तरासां
न स्वप्नावाप्तलक्ष्मा स्वपघनवनिता स्रग्धरावस्त्रभोगाः ॥

सप्तम्यः पञ्च वर्णा लघव इह चेच्छत्रमाकृतौ स्यात्। लघुयुग्मं चान्यजं यदि स्यात् प्रथम इह[3] तदा स्यात् पताका प्रकृत्याम्[4]। अपि च—नजभा जास्त्रयो रश्च सिद्धिका वा, चित्रलता वा, शशिवदना वा, रुचिरा वा।

अफलयुतां पुरीं श्रयति न त्वटवीं सुफलार्थसिद्धिकां
स्त्रियमपि नित्यपुष्पबहुलां न तु[5] चित्रलतां सुपुष्पिताम्।
शशिवदना वधूरिति च यन्मनुते तदपोष्यते[6] मुधा[7]
यत उरुचन्द्रकान्ता मुखरत्नशुभा[8] रुचिरा वनस्थली ॥

अत्रैव तृतीयगणस्य[9] षष्ठस्य च विपर्यासेन मञ्जरी। इहैव यदि लघुरन्तिमोऽथ जलगाश्च यदा मत उत्कृतौ सुधाकलशः[10]। चतुर्दशभिर्द्वादशभिश्च यतिः ॥२४॥

अथाकृतौ—

**भद्रकं[11] भ्रौ नरौ नरौ नगौ दिगादित्याः ॥२५॥**

भरौ नरौ द्विकौ न्गौ भद्रकम्। दश द्वादश यतिः।

---

१. 'वृद्ध' मै०२, त्रि०। २. '०दुष्टि०' मै०१, मै०२।
३. 'चेच्छत्र·· इह' नास्ति मै०१, मै०२। ४. '०काभिकृत्याम्' मै०१, मै०२।
५. 'नित्यपुष्पबहुभिन्नक' मै०१। 'नित्यपुष्पबहुलीं न तु' मै०२।
६. '०पीक्षते' मै०१। ७. 'मया' मै०२।
८. '०कान्तमुखरक्तशुभा' मै०१, मै०२। ९. 'तृतीयस्य' त्रि०।
१०. 'सुधाशकलः' मै०१, मै०२। ११. 'सुभद्रकं' त्रि०।

पञ्चकभूतहर्म्यगुरुभिर्विभागर्तालयैश्रितम्बस्तये च
तनुरुहमण्डलाभमणयस्स्रजस्सुवसनानि[1] चाङ्गरुचये ।
प्राणसमा समन्वितगुणा समाङ्गरुचिरा वधूश्च रतये
स्याद्द यदि किं न भद्रकमयं पुमान् वहति किं तु चञ्चलमिदम् ॥

भद्रकशब्दो गीतिविशेषे हर्षे च । अपि च—भौ द्वौ रसाश्चत्वारो[2] गुरुश्च कर्षगतिः ।

स्वप्ने गतेन जनेन साधितराज्यफलं न फलं ह्यदृढत्वा-
देवमिहापि सुखं शुभं न मतं विषयेषु भवं क्षणिकत्वात् ।
यच्च जनः स्थिरमेव किंचन वस्तु सुखं मनुते मतिमन्द-
स्तस्य च विच्युतिरस्ति नैव विभाव्यते ऋक्षगतिर्दिवि यद्वत् ॥२५॥

अथ विकृतौ—

**अश्वललितं नजौ भजौ भजौ[3] भ्लौ ग् रुद्रादित्याः ॥२६॥**

नजौ[4] भजौ द्विकौ भलगाश्चाश्वललितम्[5] । एकादशे द्वादशे च यतिः ।

नव दश वाष्ट वापि शुभदा अजासु दशना न सप्तदशना
श्रवणयुगं प्रलम्बि शुभदं गलश्च मणलः पृषन्ति च गले ।
शुभमणिकं[6] ललामरुचिरं पराश्वललितक्रमं[7] च गमनं
तत इह लक्षणं पशुषु[8] च स्थितं न नृषु ते न कश्चन गुणः ॥२६॥

**मत्ताक्रीडा मौ त्नौ नौ न्लौ ग् वसुपञ्चदशर्कौ[9] ॥२७॥**

मौ द्वौ तो नाश्चत्वारो लगौ च मत्ताक्रीडा । अष्टौ पञ्चदश च[10] यतिस्थानम्[11] ।
अष्टकौ द्वौ सप्तकश्चेत्यन्ये ।

श्राव्यं गीतं बाला रामा विदधति निशि निशि कतिपयसमयं[12]
नृत्यत्यन्या तन्वी[13] वल्गन्मणितति तटिदिव कतिपयसमयम् ।
अन्या मत्ता क्रीडा दक्षा रमयति रतिरिव कतिपयसमयं[14]
धन्यः कोऽस्मादित्यौत्सुक्यं विषयिषु विजहिहि विषमिव विषयान् ॥

---

१. '०लाभमऐध०' मै०१, मै०२ । २. 'रस्सा०' मै०१, मै०२ ।
३. 'भजौ' नास्ति कोशेषु । ४. 'नज' मै०१, मै०२ ।
५. 'अश्व' नास्ति मै०१, मै०२ । ६. '०णिकल०' मै०१ ।
७. '०चिराश्वल०' त्रि० । ८. 'पशु' मै०१, मै०२ । ९. 'यतिः' अधिकं त्रि० ।
१०. 'च' नास्ति मै०१, मै०२ । ११. 'यतिः' त्रि० ।
१२. 'अन्यामत्ताक्रीडा दक्षा रमयति' अधिकं मै०१ । १३. 'तन्वी' नास्ति मै०१ ।
१४. '०यु' मै०१ ।

अपि च—तो जाष्षट् लघु गुरुश्च शङ्खः—

यद्यप्यमरोऽमृतपानवशादुपयाति तथापि पुमान् मरणं
यद्यप्यबला सुरलोकभवा कुशरीरमथापि विनिन्द्यतमम् ।
यद्यप्यनुजा मनुजाश्चभिकाः परलोकसुखाय तथापि[1] न ते
शङ्खोऽपि निधिर्यदि नाम वशे भवति क्षुदथापि[2] नृणां समये ।।

एकादशसु द्वादशसु च यतिः ।

पुर इह नो यदि हंसगतिस्तरुणो दयितश्च समं च परम् ।।२७।।

अथ संकृतौ—

तन्वी भतौ न्सौ भौ न्यौ द्विरादित्याः[3] ।।२८।।

भतनसा भौ द्वौ नयौ च[4] तन्वी । द्वौ द्वादशकौ यतिस्थानम्[5] । पञ्च सप्त षट् षट्[6] चेत्यन्ये ।

सत्कविवाणीं[7] विदुरतिमधुरां स्वादुरसामिव रसगुणयोगात्
सा[8] शुभमर्थं निवहति बहुलं श्रीरिव वारिधिपयसि विशाला ।
वर्णविशेषैः कृतशुभरचना चित्रवधूरिव समभुवि तन्वी
क्वापि च तत्त्वं विमृशति यदि सा सर्वजनैरपि भवति निषेव्या ।।

अपि च—भयौ गणौ चतुष्कौ मणिमाला ।

श्रुत्यवनतोरुप्रेक्षणसदक्षां[9] संहृतनितम्बप्रान्तभुवमिष्टाम्
आत्मभुवमन्तस्साधु[10] विदधाना[11] योगकृतसाङ्गां प्राप्तनवयोगैः[12] ।
मानबलगुर्वीं नित्यविजनस्थां सा यदि नवश्रीकण्ठमणिमाला
तत्त्वमणिमय्याः प्राप्य परितुष्टा[13] योषितमनार्याः प्राप्य परितुष्टाः[14]।।

षट्सु षट्सु च यतिः ।।२८।।

अथाभिकृतौ—

---

१. 'तथापि' नास्ति मै०१, मै०२ ।
२. 'क्षत्तथापि' मै०२ ।
३. 'इन्द्रियस्वरमासाः' मुद्रिते ।
४. 'च' नास्ति मै०१, मै०२
५. 'स्थानम्' नास्ति मै०२ ।
६. 'षट्' नास्ति मै०२ ।
७. 'सद्विवाणी' मै०१, मै०२ ।
८. 'सा' नास्ति मै०१, मै०२ ।
९. '०प्रेषणसदृक्षां' मै०२ ।
१०. '०मिष्टमात्रमुव०' '०सादु' मै०२ ।
११. '०सा विदधापि' त्रि० ।
१२. '०वन०' मै०१, मै०२ ।
१३. 'मणितुष्टा' मै०१ । 'मणिकृष्टा' मै०२ ।
१४. '०कृष्टाः' मै०२ ।

क्रौञ्चपदा भ्मौ स्भौ नौ नौ ग् भूतेन्द्रियवस्वृषयः ॥२८॥

भमसभा नाश्चत्वारो गुरुश्च क्रौञ्चपदा। पञ्चकौ द्वौ अष्टकः सप्तकश्च यतिः[1]।

पुण्यनदीनां सैकतभूमिः घनतरुविगलितपरिमलकुसुमा
पुष्पविचित्रा स्वादुफलाढ्या विघटितसरसिजदलजलपवना।
योजनगन्धा[2] सङ्गनिसृष्टा स्रुतरसनतमधुरवनतसुफला[3]
क्रौञ्चपदाङ्का हंसगणाढ्या व्यथयति[4] कथमिव विरहिणमधिकम् ॥

अपि च—रसौ जाष्षट् गुरुश्च कुमुद्वती।

पश्य कोकविपर्ययं यदि चास्य रुचावुदयत्यविखण्डितमण्डले[5]
वर्धते[6] नितरामयं जलधिर्विरही[7] तु जनो नितरां परिकृश्यति[8]।
तापमर्कमरीचिजं विजहाति जनो विरही तु पुनः परितप्यते
चिन्तया विरहातुरा जनता[9] परिशुष्यति हृष्यति साधु[10] कुमुद्वती ॥२९॥

अथोत्कृतौ—

भुजङ्गविजृम्भितं मौ त्नौ नौ सौ लगौ वसुरुद्रर्षयः ॥३०॥

मौ द्वौ तो नास्त्रयो रसलगाश्च भुजङ्गविजृम्भितम्। अष्टावेकादश सप्त च यतिः।

जह्यादग्रे क्रोधव्याधिं कलिकरमघशतशरणं शरीरविशोषणं[11]
कृत्याकृत्याज्ञानस्थानं[12] परवधपरिभवविधिना कृतार्थमहर्निशम्।
दूरे जह्यात् क्रोधाविष्टं भ्रुकुटिकुटिलविकटमुखं विलोहितलोचनं
यद्द्रोषश्वासप्लोषप्रकटितपृथुफणिफणकं भुजङ्गविजृम्भितम् ॥३०॥

अपवाहको म्नौ न्नौ नौ न्सौ गौ नवर्तुरसेन्द्रियाणि ॥३१॥

मो नाष्षट् सो[13] गौ च द्वावपवाहकः। नव षट्कौ द्वौ पञ्च च यतिः।

---

१. 'भ्मो···यतिः' नास्ति मै०१, मै०२। २. 'योषितगन्धा' मै०१, मै०२।
३. '०धुरनततरुफला' मै०१, मै०२। ४. 'प्रथ०' मै० १, मै० २।
५. '०खण्डं त०' मै० १। ६. 'वध्यते' मै० १, मै० २।
७. 'जयीर्वि०, मै० १, मै० २। ८. '०श्यतु' मै० १, मै० २।
९. 'जलता' मै० १, मै० २। १०. 'सा' मै० २।
११. '०शेष०' मै० १, मै० २। १२. 'कृत्वाकत्यज्ञान०' मै० १। 'कृत्याकृत्यज्ञान०' मै० २, त्रि०। १३. 'सौ' त्रि०।

कान्तारेषु कटकभुवि[1] पटुषु रिपुषु वटुषु सुखिषु[2] कनके[3] लोष्टे
निन्दायां स्तवनवचसि सुख उदयति बहुलविपदि[4] समदृष्टिस्सन् ।
आत्मानं परमजनमजरमनरमभयमगुणमभिसन्ध्यायन्[5]
निर्वाणं व्रजति परममथ[6] गमयति भवजलनिधिमपवाहं[7] च ॥

अपि च—ना अष्टौ गौ च द्वौ वनतिलका । अष्टकौ द्वौ दशकश्च[8] यतिः ।

इति किल वृषविधिघनविधिरिति विधिभवनिरसनविधयोऽमी
क्रमश इह जगति बहुविधमघशतमुपशमयितुमलमुक्ताः ।
क्षणमपि यदि जन इह कृतरतिरयमथ भवति फलवती वाक्
विलयनपदमुरु वनगततरुरिव बहुफलवनतिलकानाम् ॥

इदमुत्कृतौ द्विगुर्वन्तं[9] वृत्तम् । एवं शक्वर्यां द्विगुर्वन्तमुपचित्रकम्, अत्यष्टौ मृदुललित-पदम् । पञ्चकौ द्वौ सप्तकश्च यतिस्थानं चेत् त्वरितपदम्[10] । पञ्चद्वादशसु[11] चेद् वसु-धारा । संकृतौ कुसुमबाणः ॥३१॥

एवं गायत्र्यादिजातय उक्ताः । संप्रति दण्डको नाम जातिः—

## दण्डको नौ रः[12] ॥३२॥

नौ द्वौ रगणाश्च[13] सप्त[14] दण्डकः[15] स्यात्[14] । रगणाश्च सप्तावराः स्युः, अन्यथा अतिशक्वर्यादिष्वन्तर्भावात् । तथा हि नौ द्वौ राश्च[16] त्रय इत्यतिशक्वर्यां वितानमेव स्यात् । चत्वारो राश्चेद् धृतौ निशा नाम वृत्तं स्यात्[17] तारका वा । पञ्च राश्चेत् प्रकृतौ तेजो[18] नाम, षट् चेत् संकृतौ नीलाभ्र[19] नीलालकं मेघमालं[20] वा । एतस्मात् सप्तावराः[21] कार्याः । ते च यथाकामं वर्धनीयाः । वृद्धिश्चासहस्राक्षरादित्या-चार्याः । त्रिकस्य तु गणस्य वृद्धौ सहस्राक्षरत्वं नोपपद्यत इत्येकोनसहस्राक्षरान्ताः॥३२॥

---

१. 'कटभुवि' मै० १ । 'कटि०' मै० २ । 'कटकभूमिषु' त्रि० २. 'सखिषु' मै०२ ।
३. 'सुविधाकनके' त्रि० । ४. 'ल' नास्ति मै० २ ।
५. '०ध्याय' मै० १, मै० २ । '०मजं नम०' त्रि० । ६. '०मघ' मै० २ ।
७. 'नि' नास्ति त्रि० । ८. 'दशश्च' मै० १ । ९. 'द्विगु०' त्रि० ।
१०. 'इदमु पदम्' नास्ति मै० १, मै० २ । ११. 'द्वादसु' मै० १ ।
१२. 'नौ राश्च दण्डकः' त्रि० । १३. 'रश्च' मै० १, मै० २ ।
१४. 'सप्त' 'स्यात' न स्तः मै० १, मै० २ । १५. 'दण्डकाः' मै० १, मै० २ ।
१६. 'राश्चि' मै०१ । १७. 'स्यात्' नास्ति मै०१, मै०२ ।
१८. 'तोजा' मै०१ । 'तोजो' मै०२ । १९. '०लाग्रं' मै०२ । 'मृङ्गाभ्रम्' त्रि० ।
२०. 'मेघमालं' नास्ति त्रि० । २१. 'सप्तवाराः' कोशेषु ।

